क्रमज्याभिश्चक्रमानीय तेन द्राक्केन्द्रजां गतिम् ।
गुणितां चलकर्णाप्तां शीघ्रभुक्तेर्विशोधयेत् ॥ १४० ॥
शीघ्रस्फुटगतिः शेषो यदि शुद्धिर्विलोमतः ।
सम्भवेद्वशिष्टा तद्गतिर्वक्रेति कथ्यते ॥ १४१ ॥
एवं मन्दस्फुटा शीघ्रस्फुटा भुक्तिर्द्विधोदिता ।
स्फुटभुक्तिरथो ताराखेचराणां विविच्यते ॥ १४२ ॥
शीघ्रस्फुटगतिर्मध्याधिका चेन्मध्यशोधिता ।
मध्योना शोधिता मध्यभुक्तेर्यत्स्यात्तदन्तरम् ॥ १४३ ॥
वक्रा मध्यान्विता चापि शैघ्रमध्यान्तराभिधम् ।
तस्मादाद्यं गतिफलं तदर्द्धेनैव मध्यमा ॥ १४४ ॥
शीघ्रस्फुटगतेर्मध्याधिकोनत्वे युतोनिता ।
वक्रत्वेऽप्यूनिता तेन ऋज्वी स्यात्प्रथमा गतिः ॥ १४५ ॥
सम्भवेद्व्यस्तशुद्धिश्चेद्वक्रा सा शेषसम्मिता ।
मन्दकोटिफलघ्नी सा त्रिज्या३४३८प्ता तत्फलार्द्धतः ॥ १४६ ॥
युतोना कर्किनक्रादिकेन्द्रयोः स्याद्द्वितीयका ।
कोटी फलघ्नी त्रिज्याप्ता सा तत्पूर्णफलेन च ॥ १४७ ॥
संस्कृता मध्यमा प्राग्वत्तृतीया स्यात्तदुज्झिता ।
शीघ्रात्स्वकेन्द्रभुक्तिः सा फलखाङ्काः९०ऽन्तरज्यया ॥ १४८ ॥
क्षुण्णाकर्णाप्तहीनाद्य भुक्तिः स्फुटगतिर्भवेत् ।
वामशुद्धौ तथा वक्रा स्फुटभुक्तिस्तृतीययोः ॥ १४९ ॥
अन्तरं स्याद्गतिफलं तुरीयं प्रथमक्रमात् ।
कदाचित्कतयैर्चौज्झि सौरोक्तं भुक्तिसाधनम् ॥ १५० ॥
कुजज्ञशनिमन्दोच्चगतयस्त्वृजुवक्रिताः ।
प्रथमायां द्वितीयायां शोध्या योज्याः क्रमेण च ॥ १५१ ॥

ततो द्विनिघ्नतो भाज्ये प्राक्तनकोटिफलाहतेः ।
ग्रस्य तु स्पष्टशीघ्रोच्चभुक्तेर्मध्यद्युतीयके ॥ १५२ ॥
प्रोज्झ्याद्वितुर्ये कर्त्तव्ये तत्र तुर्य्यगतेः फलम् ।
पृथक्संस्थाप्य तदधो मन्दकोटिफलाहतम् ॥ १५३ ॥
त्रिज्याप्तं मन्दकेन्द्रेऽस्य कर्क्यादौ मकरादिके ।
धनर्णमूर्ध्वे क्रमशः कृत्वा तद्विस्फुटं भवेत् ॥ १५४ ॥
शीघ्रार्द्धभुक्तौ वक्रायां यदि मान्द्यार्द्धजं फलम् ।
ऋणं तदा तयोर्योगो धनं चेद्वियुतिर्द्वयोः ॥ १५५ ॥
शेषो द्वितीयभुक्तिः स्याद्वक्रैवाथास्तु संस्कृतेः ।
यस्मान्मन्दफलं वार्किनक्रायोः स्वर्णमेव तत् ॥ १५६ ॥
स्फुरन्ति गत्यानयने बहुधा कल्पना अपि ।
क्लिष्टभावादिह त्यक्ता ग्रहसञ्चारयुक्तयोः ॥ १५७ ॥
वर्त्तमानैष्यदिनजस्फुटग्रहकलान्तरम् ।
स्पष्टा तां भुक्तिरित्यर्कचन्द्रयोस्तु विशेषतः ॥ १५८ ॥
गुणर्तुचन्द्रै१६३स्तर्केन्द्रै१४६ रससूर्य्यै१२६र्नगाष्टिभिः१६७ ।
शररुद्रै११५श्चतुर्थांशकेन्द्रांशैर्भूसुतादयः ॥ १५९ ॥
सू–भवन्ति वक्रिणस्तैस्तैः स्वैः स्वैश्चक्राद्विशोधितैः ।
अवशिष्टांशतुल्यान्त्यकेन्द्रैरुज्झन्ति वक्रिताम् । इति ॥ १६० ॥
व्यवहारे च दृक्सिद्धावुदयास्तमयो द्विधा ।
खेचराणां स्थूलसूक्ष्मौ कथ्येते प्रथमाविह ॥ १६१ ॥
प्रतीच्यामन्त्यकेन्द्रांशैरस्तं यान्ति कुजादयः ।
दृक्सुरै२३२र्गोऽर्थशशिभिः१५९ रसवेदाश्विभिः२४६ क्रमात् ॥१६२॥
कुम्भदनै१७७स्त्र्यब्धिगुणैः३४३ प्राच्यामुद्यन्ति ते पुनः ।
दिग्नेन्द्रैः२८ कुनखैः२०१शक्रैः१४गुणाष्टविधुभिः१८३र्घनैः१७ ॥१६३॥

प्राच्यामस्तं भृगुज्ञौ तु दिग्गुणै२१० रसनिर्जरैः३३६ ।
प्रतीच्यामुदयं यातः खशरैः५० कृतबाहुभिः२४ ॥ १६४ ॥
रुद्रै११रूनोऽधिकश्चन्द्रः सूर्य्याद्यात्यस्तमुद्गमम् ।
अथ स्वमन्दशीघ्राभ्यां पूर्व्वोक्तक्रमतश्च्युतः ॥ १६५ ॥
स्फुटग्रहो मन्दचलैः फलैर्व्यस्तधनर्णकैः ।
मुहुः सुसंस्कृतः स्थैर्य्यं प्राप्तो मध्यग्रहो भवेत् ॥ १६६ ॥

ग्रहस्फुटीकरणपरिश्रमश्रम-
मनुष्णकृत्प्रमदपदं वदन्ति यत् ।
विलिख्यते मृदुचलखण्डजं फलं
मयामलं चपलविबोधदं हि तत् ॥ १६७ ॥

शून्यादिसिद्धा२४वधि खण्डसंख्याधोऽधो लिखेन्मान्द्यफलं लवाद्यम् ।
तदन्तरं सर्व्वखगस्य कोटिः फलं कुजादेश्च गते रवीन्दोः ॥ १६८ ॥
खा०ष्टवेदा४८वधि खण्डसंख्या तले तथा शैघ्र्यफलं लवाद्यम् ।
खण्डान्तजं खण्डफलान्तरोत्थलिप्तादयस्तच्चलकर्णलिप्ताः ॥ १६९ ॥
पश्चात् फलाद्यस्य विलेखनीया वक्रप्रवेशापगमस्वभागाः ।
द्राक्केन्द्रजाश्चास्तमयोदयांशाः कुजज्ञदेवेज्यसितासितानाम् ॥१७०॥

ग्रहोनमन्दोच्चभुजालयांश*-
लिप्ता विलिप्ताः पृथगष्टनिघ्नाः ।
अन्ताहृताः खर्त्तुभि६०रभ्रषड्भि६०-
र्वियद्गुणै३०स्तत्फलसंयुताश्च ॥ १७१ ॥
तद्राशिसंख्योत्थफलं गताख्यं
भागादयः खण्डफलान्तरघ्नाः ।

* भुजालयः राश्यादयः इत्यर्थः ।

गम्यात् खषड्६०भक्तफलाप्तमूल-
भागाः खरामै३०र्विहृताः फलं तत् ॥ १७२ ॥
शिष्टाहिनिघ्नाः फलयुग्गताख्यं
मान्दं फलं प्राग्वदिदं धनर्णम् ।
खण्डान्तरघ्नो मृदुकेन्द्रभुक्ति-
स्तत्त्वाश्वि२२५भक्ता फलमिष्टभुक्तेः ॥ १७३ ॥
स्यात्खण्डमध्येऽथ पुरः परोक्षखण्डोत्थलिप्ता फलमन्तरस्य ।
लेख्यं गतिश्च स्फुटमेवमेतत् स्वर्णं कुजज्ञार्किमृदौ च शीघ्रे ॥ १७४ ॥
शीघ्राद्ग्रहोनाद्गृहषट्कमाद्यं केन्द्रं गतं गम्यमथान्त्यषट्कम् ।
तद्राशिभागादिकमष्टनिघ्नं प्राग्वद्धृतं राशिमितास्तु खण्डाः ॥१७५॥
यातास्तदुत्थं फलमंशकादेः खण्डान्तरघ्नात् खगुणा३०प्तयुक्तम् ।
वर्द्धिष्यमाणे फल एव कार्य्यं तत्क्षीयमाणे पतितं गताख्यात् ॥१७६॥
स्फुटं फलं शैघ्र्यमिदं धनर्णं
केन्द्रस्य पूर्व्वार्द्धपरार्द्धयोः स्यात् ।
शैघ्र्यार्द्धमान्द्यार्द्धसमग्रमान्द्य-
शैघ्र्यैः फलैः प्राग्वदिह क्रियाः स्युः ॥ १७७ ॥
सूर्य्येन्दुभौमपरिधिक्षयवृद्धिभेदा-
न्मान्द्यं फलं चलफलप्रतिमं विलेख्यम् ।
खण्डैर्गजाब्धिभिरिदं निजवर्द्धमान-
क्षीणत्वतः स्फुटमपीह न वक्रिता स्यात् ॥ १७८ ॥
भौमस्य यन्मृदुफलं परिधिक्रमोत्थं
द्वाविंशत२२स्तदिह सप्तसु७ खण्डकेषु ।
साध्यं न किन्तु भवनत्रयजं ११।२।४७ विलेख्यं
तत्र क्षयर्द्धिविषमत्वनिवृत्तिहेतोः ॥ १७९ ॥

द्राक्केन्द्रजाखण्डफलान्तरघ्नी भुक्तिर्हृता तत्त्वयमैः२२५ फलस्य ।
चयेन युक्तोनितमध्यभुक्तिर्भवेत्क्रिलाद्या फलहृद्विशाद्योः ॥ १८० ॥
द्वितीयमन्दोत्थफलान्तरघ्नी तत्त्वाश्वि२२५ह्रल्लब्धदलोनयुक्ता ।
सा नक्रकर्क्यादिकमन्दकेन्द्रे द्वितीयभुक्तिः पुनरेवमेवा ॥ १८१ ॥
फलान्तरघ्नीषुभुजाश्वि२२५भक्ता तल्लब्धहीनान्वितमध्यभुक्तिः ।
भवेत्तृतीया च तदुज्झिताद्य भुक्तिर्भवेत्केन्द्रगतिस्तुरीया ॥ १८२ ॥
सा तुर्यखण्डान्तरसङ्गुणेषुपक्षाश्वि२२५ह्रल्लब्धयुतोनिता चेत् ।
स्फुटा फलद्विजययोः स्वखण्डमध्येष्वियं स्यादनृजुः पुरेव ॥ १८३ ॥
कुजज्ञसौरिप्रथमद्वितीयगत्योर्धनर्णं क्रमशो विधाय ।
वक्रर्जुमन्दोच्चगतिं द्वितीयतृतीयभुक्ती तत एव साध्ये ॥ १८४ ॥
मन्दर्जुभुक्तेः प्रथमाल्पका चेद्विलोमशुद्धेरवशेषतः स्यात् ।
द्वितीयभुक्तेश्च तथा तृतीयभुक्तेः फलं किन्तु धनर्णवामम् ॥ १८५ ॥
एवंविधे सम्भवतस्त्रयाणां द्वितीयतार्तीयगती परोक्षात् ।
वक्रादिमा मन्दविदोस्तनोस्वेदक्रोचभुक्तेः पतितावशेषात् ॥ १८६॥
साध्या द्वितीयाथ ततोऽधिका चेत्तयोज्झिता साम्यमतोविलोमम् ।
नक्रादिभुक्ताद्दजुमन्दभुक्तिर्योज्या ततो साम्यफलञ्च वाम्यात्॥१८७॥
क्वचित्फलं नष्टमविस्फुटं चेत्तत्खण्डसंख्यार्थभुजाश्वि२२५निघ्नी ।
कलात्मकं केन्द्रमतः फलाद्यं दोर्ज्यादिनानीय विलेखनीयम् ॥१८८॥

स्फुटार्थमस्तान्तरभागकेषु
शुक्रेज्यचन्द्रज्ञयमारकाणाम् ।
अस्तं नवा९शा१०शिव११सूर्य१२शक्र१४-
भूपेषु१६ वक्रस्य भृगोर्नगेषु७ ॥ १८९ ॥

एतेऽशकाः खाभ्रगजेन्दु१८००निघ्नाः प्राक्सायनार्कोदयमानभक्ताः ।
पश्चात्सषड्भायनसंस्कृतार्कलब्धप्रमाणाप्तु हृताः स्फुटाः स्युः॥१९०॥

एते रवेः प्रागुदयं परास्तं न्यूनाधिका यान्ति कुजेज्यमन्दाः ।
वक्रौ भृगुज्ञावथ तावचक्रौ पूर्वास्तपश्चादुदयौ विधुश्च ॥ १८१ ॥
पूर्व्वोक्तकेन्द्रांशदिने ग्रहार्कान्तरैस्तदंशान्तरलिप्तिकाद्याः ।
गत्यन्तराप्ताश्च फलं दिनादिस्वर्णं भवेद्वक्रिणि भुक्तियुत्या ॥ १८२ ॥
ग्रहार्कगत्योस्तनुभूरिभावं ज्ञात्वा ततो भाविगतौ च कालौ ।
वक्राव्यतः खेटद्युतिप्रकाशादुक्तांशतुल्यत्वमवैतुमिष्टम् ॥ १८३ ॥
इतीरितैरस्तमयोदयांशैः सिद्धाः स्वकालाः खलु लेखनीयाः ।
दृक्कर्म्मसिद्धास्तमयोदयानां सुदुष्करत्वादव्यवहारिपक्षात्॥* ॥१८४॥
यथात्र लिखितानि खण्डजफलान्तराणि क्रमा-
त्तथा गतिफलान्तरं द्युतिकलान्तरं साध्यताम् ।
चलद्युतिगतिस्फुटीकरणमात्मखण्डान्तरैः
पुरोदितफलोच्चयानयनवद्विधेयं बुधैः ॥ १८५ ॥
कार्य्यः सूक्ष्मनिशेशयोः प्रतिदिनं विस्पष्टभावः पुनः
पक्षे पञ्चदले बुधस्य विहितोऽन्येषान्तु पक्षान्ततः ।
मध्ये मध्य इह व्रजेद्यदि खगः सञ्चारवक्रार्जवा-
न्यस्तञ्चाप्युदयं तदेष्टदिनजः कार्य्योऽसकृद्भुक्तिभिः ॥ १८६ ॥
सञ्चारध्रुवलिप्तिका भपदजा२०० भार्नाश८०० ग्रहाणा१८००ञ्च या-
स्तत्खेटान्तरलिप्तिका गतिकलाभक्ता दिनाद्यं फलम् ।
खेटे तद्ध्रुवतः पुरः परगते कालादृणं स्वं क्रियात्
काले चक्रगतौ धनर्णमिति तत्सञ्चारकालो भवेत् ॥ १८७ ॥
पक्षान्तद्वयखेचरान्तरकलास्तद्वस्रसंख्याहता-
स्तत्तद्भुक्तिकलाः फलं [illegible]तियुगखखान्तरत्वे पुनः ।

---

* इति खण्डफलसंग्रहः परिशिष्टे द्रष्टव्यः ।

भूयस्त्वन्तरके व्ययर्द्धिवशतो भुक्त्यानुपातोऽन्यथा
खेटर्क्षध्रुवजान्तरोद्धृतिवशाद्यातैष्यकालोऽसकृत् ॥ १९८ ॥
पद्मद्वन्द्वजतुर्यकेन्द्रविवरात्तद्भुक्तिलिप्तादिनै-
रानीयाभिरवक्रवक्रविलयोद्यानान्यकेन्द्रध्रुवात् ।
पद्मान्तग्रहतुर्यकेन्द्रवियुताद्याः स्युस्तदन्तर्गता
लिप्तास्ता विहृताः फलैर्दिनमुखैर्लभ्यास्त्ववक्रादयः ॥ १९९ ॥
भत्ताद्यक्रकलाः२१६०० खवह्निभि३०रथो
सप्ताश्विभि२७र्भानुभि१२-
र्भूयद्वाहुभि२७रम्बरर्तुभि६०रितो
लब्धाः स्वभोगाः क्रमात् ।
तिथ्यृक्षेन्दवराशियोगकरणानां
स्युः खपद्माद्रयः७२०
खाभ्राष्टौ८०० खखकुञ्जरक्षितिमिताः१८००
खाभ्राष्ट८००खाङ्गाग्नयः३६० ॥ २०० ॥
स्पष्टार्कोनितविस्फुटेन्दुकलिकाभोगैर्नगै७२० र्भक्तोऽस्तिथ्ये-
तत्राप्तैर्यदाप्तं स्युस्तिथयो गताः प्रतिपदो दर्शान्तमासादितः ।
लब्धाः पञ्चदशाधिका यदि तदा पञ्चेन्दु१५शेषाश्च ताः
पक्षे श्यामलके स्युरेकसहितायेद्वर्त्तमानास्तदा ॥ २०१ ॥
तच्छेषा गतगम्यका विकलिताश्चन्द्रार्कगत्यन्तरे-
णाप्ताः स्युः क्रमशो गतैष्यघटिकाः सार्कं स्वषष्ट्यंशकैः ।
तिथ्यन्तान्तिककालचालितविधोस्तत्कालभुक्त्या पुनः
साध्याः संशयितेष्टकर्म्मसमकेऽन्यत्र ह्यहेन्दन्तरा ॥ २०२ ॥
स्पष्टेन्दोः कलिकाभभोग८००विहृता लब्धाश्च दस्रादय-
स्तारा: स्वर्विंगता गतैष्यकलिकाः षष्ट्याहता भाजिताः ।

मत्वा चन्द्रमसः फलानि घटिकास्तद्द्विधोर्लाप्तका-
स्तद्भोगाप्त१८००गतक्रियादिनिलया नाड्योऽव्जभुक्त्या तथा ॥२०३॥
स्पष्टेन्द्वर्कयुतिस्तु चक्रवियुता चक्रा२१६००धिका चेद्गता
भुक्त्या योगजया८०० फलानि त हृताः शेषा गतैष्याः कलाः ।
षष्टिघ्ना रविचन्द्रभुक्तियुतिहृल्लब्धाश्च नाड्यादयः
शून्याङ्गाग्नि३६०कलायुतार्कवियुताः स्पष्टेन्दुलिप्ता हृताः ॥२०४॥
भुक्त्यैवं करणस्य३६० तानि तिथिवत्तन्नाड़िकाद्या मताः
सप्तानां ववतः सितप्रतिपदः प्राप्तार्द्धतः संस्थितिः ।
तिथ्यर्द्धेष्वपि कृष्णभूतदलतः प्राप्तासितादेर्दलं
यावत् शाकुनकं चतुष्पदमथो नागश्च किंस्तुघ्नकम् ॥ २०५ ॥

नाड़ीहराद्यदधिका गतगम्यलिप्ता-
स्तद्वद्विमृच्छति तिथिप्रमुखाङ्गजातम् ।
भोग्या निजा विकलिताः स्वघटीहराप्ता-
स्तत्तत्प्रमाणघटिकादिफलं च्ययादौ ॥ २०६ ॥

मासोऽसंक्रम ऐन्दवस्तु मलिनः सोऽन्तर्भवेदुत्तरे
संक्रान्तिद्वययुक् क्षयो यदि कदा तत्पार्श्वयोर्द्वौ मलौ ।
स्यातां मासचतुष्टयान्तरनयोः संसर्पतामादिमः
चीणोऽंहस्पतिरन्तिमो मल इमे त्याज्या विवाहादिषु ॥ २०७ ॥
श्रौतस्मार्त्तकमासिकाब्दिकविधौ संसर्पकांहस्पती
शुद्धौ नात्र मलिम्लुचः स च मलातीताब्दिके ग्टह्यते ।
कर्म्मारम्भसमाप्तिमध्य उपरागादौ तथा दुर्लभे
योगे चागतिके व्रते जनु[illegible]नादेन्दुपूजादिषु ॥ २०८ ॥
प्रायः स्यात् क्षयमासतः पुनरसौ वर्षैः कुवेदेन्दुभिः१४१
किंवा द्विद्विकुभिः१२२ क्वचिन्नवकुभि१९र्वर्षे तृतीये मलः ।

कुम्भस्थेऽर्कमृदौ हि सम्प्रति तपस्याद्या नव स्युर्मला:
क्षीणा ऊर्ज्जमुखास्त्रयो न तु तपात्वधिक्ययात्वच्छति ॥ २०९ ॥
इत्थं तिथ्यादितथ्यावयवपरिगता पञ्जिका स्थूलसंज्ञा
ग्राह्या बह्मागमज्ञै: प्रतिशरदुदयन् नित्यनैमित्तिकेषु ।
एकादश्यादिपर्व्वव्रतसुरयजनश्राद्धदेवोत्सवादौ
मस्ता विस्तार्थ्य सूक्ता भवतु भुवि हिता बृंहिता संहितार्थै:॥२१०॥

नित्यनैमित्तिकाद्युत्सवार्थोत्सुक:
पञ्जिकां व्यञ्जयत्यर्थमायूर्जिताम् ।
अञ्जनाभाचले भ्राजते य: सदा
कञ्जनाभं भजे तं भवोद्रञ्जनम् ॥ २११ ॥

इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-
श्रीचन्द्रशेखरकृतौ गणितेऽत्रिसिद्धे ।
सिद्धान्तदर्पण उपाहितबालबोधे-
ऽयात्पञ्चम: स्फुटखग: सफल: प्रकाश: ॥ २१२ ॥

इति श्रीचन्द्रशेखरसिंहकृतौ सिद्धान्तदर्पणे स्फुटाधिकारे सखखफलग्रहस्फुटीकरण-
स्थूलपञ्चाङ्गवर्णनो नाम पञ्चम: प्रकाश: ।

षष्ठः प्रकाशः ।

सूक्ष्मपञ्जिकाकाव्यादिवर्णनम् ।

उद्वाहोपनयप्रयाणनिलयक्षौरादिषु द्राग्गृहा-
रम्भेष्विष्टफलाप्तये किल मया सूक्ष्मोच्यते पञ्जिका ।
दृक्सिद्धापममार्गखग्रहणयुग्योगोदयास्तं महा-
पाताद्यं तिथिभादि कार्य्यमनया सूक्ष्मार्कचन्द्रोद्भवम् ॥ १ ॥

वृद्धौ पञ्च५ तिथेः क्षये रस६मिता नाड्यः पुराणैर्मता
नित्यं यत्परमास्ततो व्यवहृतौ स्थूलेष्यते पञ्जिका ।
प्रत्यक्षानुभवं न लुम्पति वचो युक्तिर्यतस्तन्मया
तत् साक्षात्करणाय काव्यविषये सूक्ष्मा परा तन्यते ॥ २ ॥

दृक्तुल्यतां गच्छति पर्व्वसन्धिर्येनार्कविध्वोः परिधिद्वयेन ।
तस्मान्नसंसिद्धफलागताङ्गा सत्पञ्जिका स्थूलतया पुरोक्ता ॥ ३ ॥

सूक्ष्मार्कदोःखण्डफलैस्तु सूक्ष्मा कार्य्या हिमांशोर्बहुभिर्विशेषैः ।
तत्रैव सिद्धः परिधेरभेदात् फलैस्तदुत्थैः प्रथमग्रहः स्यात् ॥ ४ ॥

एतस्य सूक्ष्मस्य रवेश्च गत्या बिम्बप्रमाणं स्थिरपर्व्वसन्धिः ।
छाया भुवस्तद्युगमन्दकर्णः सूर्य्यग्रहे सिध्यति लम्बनञ्च ॥ ५ ॥

तुङ्गान्तरं पाक्षिकनामधेयं फलं दिगंशाख्यमदस्तुरीयम् ।
क्रमेण वक्ष्यामि निरीक्ष्य यत्नाच्चित्रां गतिं रात्रिपतेश्चिराय ॥ ६ ॥

अभीष्टकालोत्थितचन्द्रमन्दात् पक्षे सिते सत्रिभसूर्य्यहीनात् ।
कृष्णे त्रिभोनार्य्यमवर्ज्जिताद्यत् केन्द्रं तदीया भुजमौर्व्विका याः॥७॥

साभ्राङ्कभू१९०घ्नी त्रिगुणेन३४३८ भक्ता
स्फुटार्क[illegible]न्तरदोर्गुणघ्नी ।
त्रिज्योद्धृता [illegible]मतः कलाद्यं
गत्या विनिघ्नं प्रथमस्फुटेन्दोः ॥ ८ ॥

तन्मध्यगत्या ७६०।३५ विहृतं फलं स्यात्तुङ्गान्तरं तेन विहीनयुक्तः।
पर्य्यायतः सत्रिभवित्रिभार्कहीनेन्दुमन्दोच्चभवोऽत्रकेन्द्रे ॥ ९ ॥
तुलाधराजादिभषट्कनिष्ठे प्राक्सिद्धचन्द्रो भवति द्वितीयः।
तत् सूक्ष्मसूर्य्यान्तरकेन्द्रपादयातैष्यदस्राः कलिकादिनिघ्नाः ॥१०॥
मौर्व्वीकृताहारहृताः फलं स्यात् कलात्मकं पाक्षिकनामधेयम्।
पक्षार्द्धयोः प्राक्परयोस्तदाद्यहीनस्तृतीयत्वमुपैति सोऽयम् ॥ ११ ॥

सूर्य्योनितस्वोच्चविधूच्चशेष-
भुजांशकान्योऽन्यविघातपिण्डात्।
खाष्टेन्दु१८०भक्ताच्च फलं नवत्या९०
युक्तं तृतीयाय फलाय हारः ॥ १२ ॥

स्वर्णार्कदोःसूक्ष्मफलं दिगा१०प्तमाद्येन्दुगत्या हतमध्यभक्तम्।
तुर्य्यं फलं स्यात्क्रमतस्तदूनयुक्तः शशी ह्यक्रम एष सूक्ष्मः ॥ १३ ॥
स्थलीषु जङ्गम्यत एव यद्वद्भुजङ्ग ऋज्वीं गतिमेति गर्त्ते।
सदोच्चकर्षातिग एवमिन्दुस्तत्साम्यमागच्छति पर्व्वसन्धौ ॥ १४ ॥
तत्राप्यतुङ्गान्तरपाक्षिके स्यात् सूक्ष्मे दिगंशाप्त्यफलं यथाहैः।
मतात्यवक्रा स्वगतिर्विलेऽपि पार्श्वद्वयस्पर्शदृढाटढित्वात् ॥ १५ ॥
भुजान्तराख्यं फलमर्कसूक्ष्मस्थूलात्मदोःखण्डफलाद्विधेयम्।
क्रमादणु स्थूलविधौ न तु स्यात् स्फुटोक्तिसाम्योऽन्यविपर्य्ययेण॥१६॥
तुङ्गान्तरं यत् फलमत्र सिद्धं त्रिज्याहतं तत् प्रथमेन्दुभान्वोः।
विश्लेषदोर्ज्याप्तफलं तदीयान्तरोत्थकोटीगुणसङ्गुणञ्च ॥ १७ ॥
त्रिज्योद्धृतं तत् पुनरर्कचन्द्रमत्यन्तरघ्नं त्रिगुणाप्तलब्धम्।
योज्यं तदेव प्रथमेन्दुभुक्तिफले भवेद्भु[illegible]ं द्वितीयम् ॥ १८ ॥
तत् संस्कृतं मध्यगतौ पुरोवद्भवेद्द्वितीया रजनीशभुक्तिः।
वर्गीकृतं पाक्षिकलिप्तिकाद्यं हारोद्भवस्याद्यफलस्य वर्गात् ॥१९॥

विशोध्य तच्छेषपदं द्वितीय-
चन्द्रार्कगत्यन्तरसङ्गुणं तत्।
गोभूघनाप्तं१७१९ सितरुग्द्वितीय-
भुक्तौ धनं पद्मपुरोऽन्तिमाङ्घ्रिगोः॥ २०॥
ऋणं पदोर्मध्यमयोरिति स्यात् सूक्ष्मान्त्यभुक्तिः शशिनस्तृतीया।
दिनान्तरेन्द्वन्तरसंमिता वा तत्सिद्धतिथ्यादिशुभेषु चिन्त्यम्॥ २१॥
विध्याद्यनिष्टं यदिहास्ति तत्तत्त्याज्यं पुनः स्थूलमते यदेतत्।
तत्रापि हेयं बहुसम्मतत्वात् स्थूलेन नित्यव्यवहारसिद्धेः॥ २२॥
व्यर्केन्दुकेन्द्रौजसमाङ्घ्रियुग्मं पद्मादिमान्त्यार्द्धयुगं प्रमेयम्।
पद्माङ्घ्रयः केन्द्रभषट्कयोः स्युः शराब्धुराशि४५प्रमितैश्च भागैः॥२३॥
वक्ष्येऽत्र भुक्तिं ग्रहणे प्रसिद्धां
यथैव पर्व्वान्तगतैष्यकाले।
चन्द्रः स्फुटः स्यात् स्थितिमर्द्दकालौ
दृक्तुल्यतामिति यया च सिद्धः॥ २४॥
न्यस्यद्विधाद्येन्दुगतेः फलं त-
दन्येन तुङ्गान्तरकोष्ण१६० निघ्नम्।
परेण तस्मान्त्यफलेन२०१ भक्तं
गत्याद्ययाप्तं किल मध्यया७९०।३५तम्॥ २५॥
फलान्वितं कर्किमृगादिमन्दकेन्द्रे तदाद्योनितमध्यभुक्तिः।
द्विधार्कभुक्त्या ऋणितार्द्धहारभक्ताप्तयुक्तान्त्यगतिः स्फुटेन्दोः॥२६॥
एकत्र नित्यान्यपरत्र काम्यान्यवेक्ष्य कर्त्तुं यदि पञ्जिकायाम्।
असम्मतिः स्याज्जगतः प्र[illegible]त् कार्य्यं तदा सूक्ष्ममतेन सर्व्वम्॥२७॥
भूगर्भगे कल्पितसूक्ष्मगोले स्वदेशसूत्राकलितप्रदेशे।
कदम्बगोलाङ्कितभागलिप्ते दृष्टा ग्रहाः स्पष्टतया भचक्रे॥ २८॥

प्राग्भिर्मता यत् सकलक्रियासु तस्मिन्नवे पर्य्ययबीजक्लृप्तिः ।
पृथग्विधा कालवशादभिज्ञैर्विधीयते स्वीक्रियते च लोकैः ॥ २८ ॥

कर्म्मार्थपक्षाद्रसमत्वसिद्धौ
निशापतेरेव महोपयोगात् ।
दृक्सिद्धयेऽस्य त्रिविधं हि बीजं
तुङ्गान्तराद्याख्यमकल्पि सूक्ष्मम् ॥ ३० ॥

तिथावृद्धौ द्विविधपक्षप्रभेदो
वेद्यः परं विश्वसृजा न चान्यैः ।
श्रेयान् स तत् शक्र१४घटीप्रभेदात्
समुद्धरेत् सारमसारतो हि ॥ ३१ ॥

यस्तु स्थिरा पृष्ठनिवासभाजां दृक्सूत्रतो लम्बनमुच्यसन्नात् ।
नभःसदो यच्च कदम्बगोलसूत्रेण विक्षेपवतोऽयनांशम् ॥ ३२ ॥

दृक्कर्मसाध्यं ध्रुवसूत्रसाम्यात्तत्पुष्पमर्कग्रहखेटयुत्योः ।
स्यात् केवलं नक्षपरक्रियासु स्वार्थेऽयनांशे स्फुटतावशेषात् ॥३३॥

वृद्धसंहितायाम्—वेलाहीने पर्व्वणि गर्भविपत्तिश्च शस्त्रकोपश्च ।
अतिवेले कुसुमफलक्षयोभयं शस्यनाशश्च ॥ ३४ ॥

गर्गसंहितायाम्—हीनमतिरिक्तकाले फलमुक्तं पूर्व्वशास्त्रदृष्टत्वात् ।
स्फुटगणितविदः कालः कथञ्चिदपि नान्यथा भवति॥३५॥

दृक्समे पर्व्वणि नृपा निर्वैरा विगतज्वराः ।
प्रजाश्च सुखिनः सर्व्वे भयरोगविवर्ज्जिताः ॥ ३६ ॥

वशिष्ठवाक्यम्—यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेन पक्षेण कुर्य्यात्तिथ्यादिनिर्णयम् ॥ ३७ ॥

शाकल्यसंहितायाम्—संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृताग्रहाः सर्व्वे यान्ति साम्यं भजन्त्येव ॥ ३८ ॥

किं तेनापि सुवर्णेन कर्णघातं करोति यत् ।
तथा किं तेन शास्त्रेण यत्र प्रत्यक्षतः स्फुटम् ॥३९॥

कर्माईकाले लम्बनप्रतिषेधकबीजोपनयग्रन्थवचनं यथा—

यदि च लम्बनसंस्कृतखेटतस्तिथिमुखानयनं परिचोद्यते ।
बधिर तर्हि तव श्रुतिगोचरं वितथमेव हि लम्बनशासनम् ॥४०॥

अतः कुमध्याहृतखार्द्धसूत्रे
दृक्तुल्यतामेति नभश्चरो यः ।
स एव शुद्धः परमार्थतः स्यात्
स्फुटस्ततोऽन्ये विहगास्त्वतथ्याः ॥ ४१ ॥

भूपृष्ठसर्व्वदेशानां मध्यमेव यतः समम् ।
तत्तुल्यखेचरानीतं तिथ्याद्येव वरं ततः ॥ ४२ ॥

दृक्करणैक्यविहीनाः खेटाः स्थूला न कर्म्मणामर्हाः ।
अत इह तदर्हतायै तात्कालिकबीजविस्तरं वक्ष्ये ॥ ४३ ॥

लिप्ता विधोरर्कमही११२मिता मे दृग्गोचराः प्रत्यहमोच्चितस्य ।
कदम्बगोलागतसूत्रपाते क्रान्तौ धनर्णत्वजुषो भमध्यात् ॥ ४४ ॥

मयायबीजोपनये यदन्ते सूर्य्योक्तमाद्यं परमं रहस्यम् ।
प्रकाशये गोप्यमपीह वेदं प्रणम्य देवं जगतां हितार्थम् ॥ ४५ ॥

ब्रह्मगुप्तसिद्धान्ते च— ब्रह्मोक्तं ग्रहगणितं महता कालेन यत्खिलीभूतम् ।
अभिधीयते स्फुटं तज्जिष्णुसुतब्रह्मगुप्तेन । इति ॥४६॥

लिप्ता विधोरर्कमहीति पद्यात्क्रमध्यता स्यादिषुवापमस्य ।
तदाप्यबीजोपनयानुमेयं विक्षेपमस्यं कुवसुद्वि२८१लिप्तम् ॥ ४७ ॥

यतो विधोः सन्निभसायनस्य
क्रान्तिज्यका स्याद्गुणेन्दु१३७०तुल्या ।

तद्भाग२८१निघ्नो त्रिगुणो३४३८हृतासं
धनर्णदृक्कर्म्मभुजेषु११२लिप्तम् ॥ ४८ ॥

आयाति तद्बीज्य तदुक्तमेतद्बोध्यं कदम्बभ्रुवसूत्रमध्ये ।
सम्भाव्यते यद्यखिलश्रुतोक्ताद्दृक्कर्म्मतो भिन्नमितीह वीजम् ॥ ४९ ॥

तदापमस्याद्यविधौ भमध्यं स्याद्यत्र कुत्राप्युडुचक्रवृत्ते: ।
तुङ्गान्तरं तत्फलमन्त्यमेव व्यलोकि सूर्य्येन्दु११२कलं तदाल्वे ॥५०॥

खाङ्गेन्दु१६०लिप्तं चिरकालतोऽभूत्तद्दृष्टिङ्गासावुररीक्रियेताम् ।
इत्यादि पूर्व्वोक्तिभिरेव सिद्धं वीजै: स्वकालाच्चिसमै: स्फुटत्वम्॥५१॥

समा: सहस्रान्तर एष्यकाले प्रोक्तक्रमेण प्रथमस्फुटेन्दो: ।
दृक्चन्द्रतो लक्ष्यत एव यावान् भेद: स तद्बीजमिति प्रमेय: ॥५२॥

षट्षष्टि६६दण्डाभ्यधिका तिथिर्या कृत्स्ना पराह्णद्वयमश्नुते सा ।
सूक्ष्मैव नान्यातु तथाविधास्यात् षोढ़ाभिदाहि स्मृतिषु प्रसिद्धा॥५३॥

सायाह्नमात्रस्थगमाक्षि पूर्व्वे परे दिनार्द्धात् पुरतो गता चेत् ।
तत्श्राद्धमुक्तं कुतपे परेद्यु: स्मृत्यात्र सूक्ष्मैव मता तिथि: सा ॥५४॥

यथाह गौतम:— पूर्व्वाह्णे चेत् प्रतिपदो भूते सायममा यदि ।
आरभ्य कुतपे श्राद्धं रौहिणं न तु लङ्घयेत् इति ॥५५॥

सप्तम्यादितिथित्रयक्षयघटीर्दृष्ट्वा रसोना:६ पुन:
षोढ़ा भेदविरोधशङ्कितहृदां मा भूदिहानादर: ।
सप्तम्यादिषु[३] पञ्चधान्यतिथिषु द्वि:षट्सु[१२] षोढेति चे-
त्तात्पर्य्यं स्मृतिजं विचिन्त्यमिह दृक्सिद्धेर्न कापि क्षति: ॥ ५६ ॥

मध्येपक्षमिवेन्द्र१४सङ्क्रमघटीभेदश्च पक्षान्तयो:
स्याच्चेत् स्थूलमते तदा ग्रहणयोर्भूरिप्रभेदेक्षणात् ।
प्राञ्चो लोकभियापि सूक्ष्मतिथिमन्वेष्टुं व्यधास्यन् श्रमं
सर्व्वैर्भेन्दुयुतेरनादृततया:मन्ये तदीक्षां जहु: ॥ ५७ ॥

अथ गर्गवशिष्ठादिमुनिभिः परिकीर्त्तितम् ।
चिन्त्यं यात्राविवाहादौ सूक्ष्मर्क्षानयनं ब्रुवे ॥ ५८ ॥
चन्द्रस्य मध्यमा भुक्ति ७९०।३५-
र्भभोगः सूक्ष्म उच्यते ।
सार्द्धभोगानि ११८५।५२।१८ षड्ब्रह्म-
राधादित्युत्तराणि च४।१६।७।१२।२१।२६ ॥ ५९ ॥
अर्द्धभोगानि ३९५।१७।२६ पाशीन्द्रा-
ह्नीशयमस्यानिलानि२४।१८।९।६।२।१५ षट् ।
शेषपञ्चदशैव१।३।५।८।१०।११।१३।१४।१७।१९।२०।२२।२३।२५।२७
स्युरेकभोगानि ७९०।३४।५२ भान्यतः ॥ ६० ॥
सर्व्वभोगोन२१३४५।४१।२५चक्रस्या२१६००-
भिजिद्भोगोऽवशेषकः२५४।१८।३५ ।
वैश्व[२१]वैष्णवयो[२२]र्मध्ये
तद्भोगः स्थितिहेतुतः ॥ ६१ ॥
स्फुटेष्टखेटलिप्ताभ्यः प्रोज्झ्याश्विन्यादिभोगकान् ।
विशुद्धभोगसङ्ख्यानि भानि विद्यान्नान्यतः ॥ ६२ ॥
तच्छेषो वर्त्तमानस्य भोगोऽतिक्रान्त उच्यते ।
अशुद्धभोगात् पतितो भोग्यः स्यात् कलिकात्मकः ॥ ६३ ॥
गतैष्याः कलिकाः षष्टिगुणिता ग्रहभुक्तिभिः ।
विहृता घटिकाद्याः स्युर्गतैष्याः फलसम्मिताः ॥ ६४ ॥
समसार्द्धार्द्धभोगानां भानां साभिजितामपि ।
विवाहादिषु गृह्यन्ते पादा भोगानुसारतः ॥ ६५ ॥
राश्यन्ते राशिसञ्चारो भान्ते भान्तरसञ्चरः ।
कर्त्तव्यो नात्र राशीनां नियमो नृवभाङ्घ्रिजः ॥ ६६ ॥

यथैव सिंहमघयोः प्रवेशेऽप्येकदा स्थिते ।
सूक्ष्मा मघा कर्कटान्त्यान् भागानष्टौ भुनक्ति हि ॥ ६७ ॥
ग्रहाणां गतिलिप्ताभिर्बिम्बव्यासविलिप्तिकाः ।
हृताः संक्रान्तिनाड्यः स्युर्भानोस्ताश्चातिपुण्यदाः ॥ ६८ ॥
भवन्ति मिश्रफलदाः स्वसंक्रान्तिगता ग्रहाः ।
मण्डलस्योभयस्थत्वादेवं नक्षत्रसन्धिगाः ॥ ६९ ॥
विकला विधुविम्बस्यार्केन्दुभुक्त्यन्तरेण च ।
चन्द्रभुक्त्या च चन्द्रार्कभुक्तियोगेन चैतयोः ॥ ७० ॥
गत्यन्तरेण च हृता लब्धा दण्डादयः पृथक् ।
तिथिनक्षत्रयोगानां करणानाञ्च सन्धयः ॥ ७१ ॥
उत्पद्यन्ते यतोऽनन्ते तुङ्गापक्रमपातजाः ।
वीथयो मण्डलाकाराः स्वकक्षासु पृथग्विधाः ॥ ७२ ॥
तद्ग्रहाणां गतेर्मार्गः शीघ्रमन्दोच्चकर्षजः ।
प्रतिमण्डलनामा स्यात् क्रान्तिजातोऽपमण्डलः ॥ ७३ ॥
विक्षेपमार्गः पातोत्थः कथ्यते च विमण्डलः ।
वि[illegible]मण्डलाद्यास्तु वक्ष्यन्तेऽन्यप्रकाशके ॥ ७४ ॥
प्रतिलोमगतेः कल्पे क्रान्तिपातस्य पर्य्ययाः ।
इक्क्रमाः कल्पिताः खाद्रिचन्द्राभ्राम्बुधिषड्मिताः ६४०१७० ॥७५॥
भचक्रं सग्रहं सोच्चं सपातं सकलोड्डुगः ।
प्राक् पश्चात् प्रेरयत्येष क्रान्तिमार्गानुसारतः ॥ ७६ ॥
सप्त विंशतिभागान्तं प्राचीं मेषादिषट्कभाक् ।
प्रतीचीं प्रति तौल्यादिभाङ्गः प्रक्षिपत्ययम् ॥ ७७ ॥
यत्प्रेरणाद्विमुखास्ताराः स्वस्वापमस्थिताः ।
विक्षिप्ता इव दृश्यन्ते स्वस्थानाद्याम्यसौम्ययोः ॥ ७८ ॥

इष्टैर्दिनैस्तद्भगणा गुणिता: कल्पसावनै:१५७७९१७८२८००० ।
उद्धृता भगणर्क्षादि: क्रान्तिपात: स्फुटो भवेत् ॥ ७९ ॥
तद्राश्याद्यं चक्रशुद्धं ग्राह्यं तद्भाङ्गुलिप्रिका: ।
द्विशताप्ता: फलानि स्युश्चलांशास्तेऽयनांशका: ॥ ८० ॥
शिष्टा: षष्टिहतास्तेन हारेणा२००प्ता: कलादिका: ।
साष्टाविंशतिषष्ठ्यंशा: परा नव९।२८ गतिर्दिने ॥ ८१ ॥
करणाब्दमुखेऽंशाद्या दृग्दृशो२२ भू:१ कुसायका:५१ ।
शराब्धयो४५ द्विवेदाश्व४२ धनाख्या वृद्धिशालिन: ॥ ८२ ॥
तुलाधरादिचक्रार्द्धस्थिते पातेऽयनांशका: ।
ऋणाख्यास्तत्र मेषादिभार्द्धस्थे धनसंज्ञका: ॥ ८३ ॥
सू – तत् संस्कृताद्ग्रहात् क्रान्तिच्छायाचरदलादिकम् ।
स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्वयम् । इति ॥ ८४ ॥
सप्तर्षीणामगस्त्यस्य तथा संयमनीपते: ।
तत्तत्पार्श्वस्थताराणां क्रान्तिपातो न चालक: ॥ ८५ ॥
एतेषां भगणस्थानां स्वस्थानाद्यदि दृश्यते ।
प्राग्गतिश्चलितं चक्रं तत्पश्चादवधारयेत् ॥ ८६ ॥
प्रत्यग्गतौ पूर्व्वचारं क्रान्तिं तदनुसारत: ।
क्रान्तिमार्गात् शरं भानां दिग्भेदं तद्वशाद्बुध: ॥ ८७ ॥
छायार्कात् साधितादल्पे करणागतभास्वति ।
तदन्तरमिता भागा: प्राक्चलांशा: प्रकीर्त्तिता: ॥ ८८ ॥
करणागतचण्डांशोरल्पे च्छाया विवस्वति ।
प्रत्यक्चलांशा विज्ञेयास्तदन्तरमिता: स्फुटा: ॥ ८९ ॥
किंवायनद्वये भानोरेकक्रान्तिस्थितिर्यदा ।
तत्कालस्फुटयोगार्द्धमयनान्तग्रहादिकम् ॥ ९० ॥

तस्य चायनसंक्रान्तेरन्तरस्थाश्चलांशकाः ।
प्राक्पश्चादयने क्रान्ते*र्धनर्णाख्याः क्रमादमी ॥ ९१ ॥
प्राक्पश्चिमायतस्यैव ग्रहसञ्चारवर्त्मनः ।
पार्श्वयोर्वक्रता नाम क्रान्तिश्चापक्रमोऽपमः ॥ ९२ ॥
खगोले कल्प्यते रेखा क्रान्तिमार्गाभिधा हि या ।
वैलोम्यात् संस्कृते चक्रे चलांशैरादिमध्ययोः ॥ ९३ ॥
सा नभोमध्यगा राशित्रयान्ते सौम्यगा ततः ।
यावत्सार्द्धत्रिपञ्चांशा२३।३० न्नवभान्तेऽपि याम्यगा ॥ ९४ ॥
क्रान्तिज्या परमा तस्मात् खाद्रिविश्व१३७० कलोच्यते ।
चलांशसंस्कृतानां या ग्रहाणां बाहुमौर्विका ॥ ९५ ॥
परमापक्रमज्या१३७०घ्नी सोद्धृता त्रिज्यया३४३८थवा ।
शत१००घ्नी चन्द्रतत्त्वा२५१सा क्रान्तिज्या साभिधीयते ॥ ९६ ॥
तद्धनुःक्रान्तिकलिकाः क्रान्तिज्यावर्गवर्ज्जितात् ।
त्रिज्यावर्गात्११८१९८४४ पदं द्युज्यास्वाहोरात्रार्द्धकर्णकः ॥९७॥
शतघ्नी खेटकोटिज्या भूतत्त्वा२५१सा स्वभुक्तिभिः ।
गुणिता त्रिज्यया३४३८ भक्ता लब्धाः स्युः क्रान्तिभुक्तयः ॥ ९८ ॥
अयनांशैः संस्कृतस्य ग्रहस्याद्यन्तभार्द्धयोः ।
स्फुटक्रान्तिक्रमाद्गोलौ सौम्ययाम्याभिधौ मतौ ॥ ९९ ॥
भास्करस्य मते नास्ति प्रत्यक्चलनमायनम् ।
ग्रहे तत्संस्कृतेरेव धनत्वं वर्णितं यतः ॥ १०० ॥
तथापि ब्रह्मसौरोक्तेर्युक्तेश्चात्र मयोदितम् ।
प्राक्प्रत्यक्चलनं किन्तु च्छायार्काद्‌ज्ञास्यतेऽखिलम् ॥१०१॥

---

*संक्रान्तेरित्यर्थः

क्रान्तिज्या विषुवद्भाघ्नी द्वादशाप्ता क्षितिज्यका।
त्रिज्याहता द्युजीवाप्ता चरज्याथ चरासवः॥ १०२॥
तद्धनुस्तैरुदक्क्रान्तौ धनहीनौ पृथक् स्थितौ।
मू—स्वाहोरात्रचतुर्भागौ दिनरात्रिदले स्मृते॥ १०३॥
याम्यक्रान्तौ विपर्य्यस्ते द्विगुणे ते दिनक्षपे। इति।
शरयुक्तोनितक्रान्त्या भचन्द्रादेरपि स्वके॥ १०४॥
मू—विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता।
दिग्भेदेऽन्तरिता स्पष्टा भास्करस्य यथागता। इति॥ १०५॥
व्यवहृत्यै चरं स्थूलं पलात्मकमुदीर्य्यते।
एकद्वित्रिगृहान्तोत्थं स्वदेशजचरत्रयम्॥ १०६॥
आनीय त्रिभजाच्छोध्यं द्विभजं द्विभजात्पुनः।
एकराशिजमेवं स्याच्चरखण्डत्रयं पृथक्॥ १०७॥
सायनार्काद्दिदोराशिभागलिप्ताः पृथक्स्थिताः।
एकराशेर्यदि न्यूनास्तदा भागाश्च लिप्तिकाः॥ १०८॥
चरेणाद्येन गुणिताः शेषात् षष्ट्याप्तसंयुताः।
त्रिंशद्विभाजिताः शून्ये राशिस्थाने फलान्विताः॥ १०९॥
तद्बाहुराशिरेकश्चेत्तत्स्थाने प्रथमं चरम्।
निधायांशादिकं क्षुण्णं द्वितीयेन तथा हृतम्॥ ११०॥
फलाढ्यं प्रथमं स्पष्टं बाहुराशिद्वयं यदि।
तत्रादिद्वियुतिः स्थाप्या तृतीयघ्नं लवादिकम्॥ १११॥
त्रिंशदाप्तयुतं प्राग्वदित्थं स्याद्विस्फुटं चरम्।
प्रत्यंशं तद्विभज्यं वा सूर्य्यस्यैकैकराशिजम्॥ ११२॥
अथोदयान्तरपलान्यर्कात् सायनसंस्कृतेः।
क्रमाद्धृद्विघ्नयाढ्यानि राश्यर्द्धेषु त्रिषु त्रिषु॥ ११३॥

सूर्य्या१२ नव९ च वेदा४श्च वेदा४ नव९ च भानवः१२ ।
त्रयमाद्यं वर्द्धमानं क्षीयमाणं ततस्त्रयम् ॥ ११४ ॥
स्वभार्द्धफलसंख्याघ्नास्तिथ्या१५प्तास्तेष्विनांशकाः ।
फलं प्राक्पलतः स्वर्णं कार्य्यं वृद्धिक्षयक्रमात् ॥ ११५ ॥
तत्त्व२५संख्यार्कदोःकोटिसाम्ये स्यादथ सन्धिषु ।
गोलायनभवेष्वेषां शून्यता स्याच्चतुर्ष्वतः ॥ ११६ ॥
तद्घ्नोभुक्तिरहोरात्रपला३६००प्तासकलादिकम् ।
सायनार्कौजयुग्माङ्घ्रेः कार्य्यं खेटेष्वृणं धनम् ॥ ११७ ॥
ग्रहस्तिष्ठति यद्राशावयनांशपरिष्कृतः ।
तस्योदयासु गुणिता भुक्ती राशिकलो१८००द्धृता ॥ ११८
तत्फलाढ्यास्त्रक्रलिप्ताः२१६०० स्वाहोरात्रसवो मताः ।
ग्रहे वक्रगतौ तेन फलेन परिवर्ज्जिताः ॥ ११९ ॥
स्थूलन्तु नाड़िकाषष्टिः६० सूर्य्यसावनवासरम् ।
तत्राङ्गशर५९हीनाः स्युर्ग्रहर्क्षस्वदिनासवः ॥ १२० ॥
स्थूले दिने चेदुदयाः साध्यास्तात्कालिकाद्रवेः ।
सूक्ष्मे त्वौदयिकाद्भानोस्तदा तद्भादयः स्फुटाः ॥ १२१ ॥
क्रान्तिवृत्तद्वादशांशः खखाष्टेन्दु१८००कलोऽपि सन् ।
निजाहोरात्रवृत्तस्थो विषुवेऽतीव वक्रितः ॥ १२२ ॥
ऋजुश्चायनयोरन्ते याति यत्पश्चिमां दिशम् ।
ततो नैकविधा भुक्तिर्लग्नानां नाड़िकात्मिका ॥ १२३ ॥

एकराशेर्भयुग्मस्य
त्रिभानां ज्याः पृथक् पृथक्१७१९।२९७८।३४३८ ।
कृतीकृता२९५४९६१।८८६८४८४।११८१९८४४स्ततः स्वस्व-

क्रान्तिज्या१६८५।११८६।१३७०वर्ग४६९२२५।१४०६५९६।
१८७६९००वर्जिता:२४८५७३६।७४६१८८८।९९४२९४४ ॥१२४॥
तन्मूलानि१५७६३ ७।२७३१३९।३१५३१५ त्रिजीवाभि३४३८-
र्गुणितानि५४२०४०८।९३९१४१३।१०८४०८७३ स्वया स्वया ।
द्युजीवया३३६९।३२२७।३१५३ विभक्तानि तत्फलानां
१६०९।२९१०।३४३८ धनूंषि च १६७५।३४७१।५४०० ॥१२५॥
अधोऽध: प्रविशोध्यानि क्रमव्युत्क्रमतोऽसव: ।
मेषकर्क्यादिलग्नानां भवन्ति व्यक्षदेशजा: ॥ १२६ ॥
यद्वा राशित्रयद्युज्या३१५३
त्रिद्वेकभगुणा३४३८।२९७८।१७१९हता
१०८४००१४।९३८९६३४।५४२०००९ ।
स्वस्वद्युज्या३१५३।३२२७।३३६९ह्रता लब्ध-
धनु:प्राणा:५४००।३४७१।१६७५ पृथक् स्थिता: ॥ १२७ ॥
त्रिभासुभ्यो द्विभप्राणा: शोध्या एकभजास्तत: ।
भुजत्रिद्वेकराशीनां भवेयुरुदयासव: ॥ १२८ ॥

पञ्चाद्रिभूपा१६७५स्तर्काङ्क-
घना१७९६ नन्दाश्विगोभुव:१९२९ ।
नन्दाश्विगोभुवो१९२९ऽङ्गाङ्क-
घना:१७९६ पञ्चाद्रिषड्भुव:१६७५ ॥ १२९ ॥
गदिता उदयप्राणा मेषतौल्यादिषट्कयो: ।
उदयेऽस्तमये मध्ये समा: स्युर्व्यक्षदेशके ॥ १३० ॥
स्वदेशलग्नज्ञानार्थमधोऽध: परिशोधनम् ।
चरासूनां तथा कार्य्यं तत: स्वचरखण्डका: ॥ १३१ ॥

अजादित्रितये त्याज्याः कर्क्यादित्रितयेऽन्विताः ।
तुलादित्रय एवाद्या नक्रादित्रय उज्झिताः ॥ १३२ ॥
राशीनामुदया एवं स्वचरैः संस्कृताः क्रमात् ।
स्वदेशजाः स्युः सर्व्वत्र मध्यलग्ना निरक्षजाः ॥ १३३ ॥
यावतोदेति कालेन राशिरेतस्य सप्तमः ।
तावतास्तमयं याति स्थूलेयं चेत्रकल्पना ॥ १३४ ॥
होराद्रेक्काणयोः कालः पूर्व्ववत् साध्यते हि यः ।
राश्यर्द्धत्रिलवक्रान्तिद्युज्याभिः स तु सूक्ष्मकः ॥ १३५ ॥
चलांशसंस्कृतः सूर्य्यो वर्त्तते यत्र मन्दिरे ।
तद्भोग्यांशादयो निघ्नास्तल्लग्नप्रमितासुभिः ॥ १३६ ॥
खरामै३०र्विहृता लब्धाः प्रश्नाख्यास्तेऽसवो मताः ।
इष्टकालासुतः शोध्यास्ततस्तदपरोदयाः ॥ १३७ ॥
शोध्यास्त्वशुद्धलग्नस्य भुक्तप्राणा खवह्निभिः३० ।
हृता अशुद्धमानाप्ता भागाद्या गतभान्विताः ॥ १३८ ॥
संस्कृता वैपरीत्येन चलांशैर्भवति स्फुटः ।
लग्नः स्वदेशसंसिद्धौ राशिभागकलादिभिः ॥ १३९ ॥
इष्टकालासवोऽल्पाश्चेत् प्रश्नतस्त्रिंशदाहताः ।
लग्नाप्ता सायनार्काद्या व्यायनाः स्यात्तनुः स्फुटा ॥१४०
चलांशसंस्कृतस्पष्टलग्नभुक्तांशलिप्तिकाः ।
तन्मानघ्नाः खरामाप्ताः स्थाप्या भुक्तासवस्ततः ॥ १४१ ॥
अधोऽधो लग्नमानाद्याः सायनार्कस्य भोग्यकैः ।
लग्नासुभिर्युतास्ते स्युरिष्टकालासवस्तनोः ॥ १४२ ॥
मध्यलग्नोऽपि संसाध्यो निरक्षोदयजासुभिः ।
स्वदिनार्द्धान्नतप्राणैः प्राच्याश्चेच्चण्डदीधितेः ॥ १४३ ॥

चलांशैः संस्कृतस्यैव भुक्तराश्यंशजासवः ।
व्यक्षदेशभवा ये स्युर्नतासुभ्यो वितर्ज्जितः ॥ १४४ ॥
ततो ये राशयोऽधोऽधस्तत्प्राणाः प्रतिलोमतः ।
शोध्यास्त्वशुद्धा असवस्त्रिंशद्घ्नाः पूर्व्वलग्नजैः ॥ १४५ ॥
प्राणैर्हृताः फलांशाद्यं शोधितं त्रिंशदंशतः ।
यत्स्यादूहादिकं तच्च व्युत्क्रमाच्चलभागकैः ॥ १४६ ॥
संस्कृतं मध्यलग्नः स्यान्मध्यभं खार्क इत्यपि ।
यदि पश्चान्नतः कालस्तदा सायनभास्वतः ॥ १४७ ॥
भोग्यभांशनिरक्षासूनर्द्धमध्यभजानसून् ।
शोध्यराश्युद्भनतप्राणान् हृत्वा गगनवह्निभिः३० ॥ १४८ ॥
हृत्वा तल्लग्नजप्राणैर्लब्धांशाद्यं भपूर्व्वकम् ।
विलोमसंस्कृतं चेत्स्याच्चलांशैर्मध्यभं हि तत् ॥ १४९ ॥
प्राक् पश्चात् सायनार्कोत्थभुक्तभोग्यासुतो यदि ।
अल्पानतासवस्तत्ते त्रिंशद्घ्नास्तद्भजासुभिः ॥ १५० ॥
उद्धृता लब्धभागाद्यैः प्राक् पश्चान्नतयो रविः ।
हीनयुङ्मध्यलग्नः स्याद्दिनार्द्धे स्फुट एव सः ॥ १५१ ॥

इष्टैष्योदयजान्तरासु गुणिताः प्राच्याश्चलांशादयः
खाग्न्या३०प्ताः फलहीनयुक् स्व उदयः स्यादेष्य ऊनेऽधिके ।
यातेष्टान्तरनिघ्नखाग्नि३०विहृतप्रत्यक्चलांशैर्गते
लग्नेऽल्पेऽधिक ऊनयुक् स्वक इति स्याल्लग्नमानं स्फुटम् ॥१५२॥

पश्चात्प्रागयनांशकेषु तनवो व्यक्षे चरा१।४।७।१० द्व्यात्मकाः३।६।९।१२
साक्षे मेषघटौ युवत्यनिमिषौ देशे स्थिराः स्युः क्रमात् ।
इत्थं संस्कृतलग्नमानवशतः स्वाभीष्टदिष्टे स्फुटी-
कार्य्याश्चेत्तनवस्तदायनलवैर्नाद्यन्त्ययोः संस्कृतिः ॥ १५३ ॥

रामाः षड्विशिखैः३।५६ कृताः कृतभुजै४।२४रर्थाः स्वरैः५।७ सायका
भूभृद्वह्निभि५।३७राशुगाः कृतगुणै५।३४र्बाणाश्च पक्षाक्षिभिः५।२२।
ओड्रे भार्द्धयुगे क्रमोत्क्रमवशात् स्वलग्नदण्डाः पलैः
सम्मत्यक्षिभुजायनांशकलनात् कथ्यन्त एते स्फुटाः ॥ १५४ ॥
वेदा ग्रावकुभिः४।१७ कृता रसशरै४।५६र्बाणाश्च नन्दाक्षिभि५।२९-
र्बाणा बाणगुणैः५।३५ शराः शरभुजै५।२५रर्थाश्च नेत्राक्षिभिः५।२२।
बाणा रूपगुणैः५।३१ शरा रसगुणै५।३६रर्थाः पृषत्केन्दुभि५।१५-
र्वेदा बाणगुणैः४।३५ कृताश्च शिखिभी४।३
रामा रसार्थैः३।५६ क्रियात् ॥ १५५ ॥
सर्व्वत्रायनसिद्धमध्यतनवो वेदाः कृतार्थैः४।५४ शरा भूपै५।१६स्ते
द्विभुजैः५।२२ शराश्च विशिखै५।५र्वेदाः कृताम्भोधिभिः४।४४।
वेदा नन्दगुणै४।३९स्तुलादिषु पुनर्मेषादिवत् साम्प्रतं
प्राक्पश्चादयनांशभूरितनुतामालोच्य साध्या बुधैः ॥ १५६ ॥
लेख्या गर्गवशिष्ठमुख्यगदिता राश्यादितः साधिता
अष्टाविंशतिभभ्रुवास्तदुपरि स्थूलाश्च लिप्तात्मकाः ।*
सञ्चाराय नभःसदां च पदकैस्ते क्रान्तिपातोद्भवा
राश्याद्याः सगतिभ्रुकैर्गुणनगै७३स्तत्सञ्चयः पातवत् ॥ १५७ ॥

लिप्ताद्या क्रान्तिपातस्वगतिरिह वियत्०
खं० कुरामा३१ द्विरामाः३२
कर्थ्या५१ बाणाग्नयो३५ऽङ्गा६न्यनलशरमिता५३
नागबाणा५८स्त्रिपक्षाः२३।
कल्यादौ तद्ध्रुवो दृग्गगननगकलाः७०२
कारणाद्वा ग्रहाद्या

* नक्षत्रध्रुवकाश्चादयः परिशिष्टे प्रदत्ताः ।

रामा३ भूपा१६स्त्रिरामाः३३ शिखरिजलधयो४७

भानि२७ पूर्णार्णवाश्च४० ॥ १५८ ॥

साध्या वा मध्यमार्कानुगतकलिसमागोकुषष्ठ्यंशयुक्ता-

र्गोभूपघ्नै२१६।१६र्वियुक्ताद्विरथशत१००हृताभूपतत्त्वा२५१६सहीनाः।

षष्ठ्याप्तांशा हृतास्ते पुनरुदधिशरै५४र्हारतः शेषहाने-

स्तद्युग्माल्पाश्चलांशा विषमसमफलानुक्रमात् स्वर्णसंज्ञाः ॥ १५९ ॥

भूयः सायनभानुदोर्जलधिदृक्२४खण्डोद्भवाः क्रान्तयो

द्युज्याश्चोत्कलमध्यजाः शितिगिरौ सिद्धाश्चराद्यासवः ।

नैरक्षा उदयासवः क्रियमुखान् संसाध्य लेख्याः शिशो-

र्बोधायाप्युदयान्तरासव इमे स्पष्टाः स्युरात्मान्तरैः ॥ १६० ॥*

प्राग्जन्मार्ज्जितचित्रकर्म्मविसरं संसारिणां प्राणिनां

यः संज्ञापयितुं सरोजजनुषा संसृज्य खेटव्रजम् ।

द्राक्क्रान्द्यपवृत्तहापमादिविविधभ्रान्तौ नियोज्य स्वयं

तन्मुक्त्यै पुरुषोत्तमाख्यमसृजद्धामैतमीशं भजे ॥ १६१ ॥

इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-

श्रीचन्द्रशेखरकृतौ गणितेऽस्विसिद्धे ।

सिद्धान्तदर्पण उपाहितबालबोधे

षष्ठोऽपमाद्यणुरवीन्दुरगात्प्रकाशः ॥ १६२ ॥

इति श्रीचन्द्रशेखरसिंहकृतौ सिद्धान्तदर्पणे स्फुटाधिकारे सूक्ष्मपञ्जिका-

क्रान्त्यादिवर्णनो नाम षष्ठः प्रकाशः ।

---

* क्रान्तिपातस्य पदकानि परिशिष्टे प्रदत्तानि ।

---

# त्रिप्रश्नाधिकारः ।

## सप्तमः प्रकाशः ।

### शङ्कुच्छायादिवर्णनम् ।

दिग्देशकालकलनार्थमथाभिधास्ये
त्रिप्रश्ननामकमकर्कशवाक्यचक्रम् ।
सर्व्वोपकारकतया प्रथितं प्रकाशं
शास्त्रं सुदोपकरणाख्यमतिप्रवीणैः ॥ १ ॥

दिक्साधनार्थमवनौ सुसमीकृतायां
तोयैर्विलिख्य चतुरङ्घ्रि२४मिताङ्गुलेन ।
सूत्रेण मण्डलममुष्य समस्य मध्ये
सूर्य्या१२ङ्गुलं सुसरलं निदधीत शङ्कुम् ॥ २ ॥

तद्भाग्रमाविशति यत्र यतो निरेति
प्राक्पश्चिमस्थित इने किल तत्र बिन्दू ।
दत्त्वा ततश्च शरबाहु२५समाङ्गुलेन
सूत्रेण विम्बयुगलं विदधीत धीमान् ॥ ३ ॥

या तत्परस्परसमाक्रमणोत्थरेखा
मत्स्याकृतिर्भवति तन्मुखपुच्छमार्गः ।
चिह्नं भवेद् यमकुवेरदिशोरिहोज्झि
प्राग्बिन्दुसंस्कृतिरपक्रमजाल्पभेदात् ॥ ४ ॥

याम्योत्तराङ्कुपरि यद्वलयद्वयोत्थ-
मीनेन वासवजलाधिपयोर्दिशौ स्तः ।
दिङ्मध्यसूत्रकृतवृत्तचतुष्टयोत्थ-
मीनैर्भवन्ति विदिशोऽन्तरजास्ततस्तः ॥ ५ ॥

शङ्कुच्छायाकृतियुतिपदं कर्ण इत्युच्यते तद्-
वर्गाच्छङ्कोः कृति१४४विरहितात्स्यात्पदं भाप्रभायाः।
वर्गेणोनात्पदमपि नरः शङ्कुभे कोटिबाहू
तद्युग्माग्रान्तरमभिहितं कर्णसंज्ञं सुधीराः॥ ६॥

योग्यं वर्गं चरमविषमात्प्रोज्झ्य मूलं द्विनिघ्नं
कृत्वा हृत्वा समकममुना तत्पराप्तव्यवर्गम्।
त्यक्त्वा पङ्क्तौ द्विगुणितमिदं न्यस्य लब्धं चलन्त्या
पङ्क्त्या प्राग्वद्भवति हरणे स्यात्पदञ्चार्द्धमस्याः॥ ७॥

मूलादल्पः प्रभवति यदा मूलशेषस्त्रिनिघ्नो
लिप्तीभूतो* रस६हतसरूपेण१ मूलेन भक्तः।
लब्धा लिप्ता यदि पदसमस्त्वाधिकोऽसौ द्विनिघ्नः
सैकोऽब्धि४घ्नत्रियुतपदहृत् स्यात्कलाद्या पुरोवत्॥ ८॥

आयुर्दैर्घ्ये गुणककलिकामात्रभेदाद्विसप्त७२-
त्यङ्कां भेदो भवति यदतः सूक्ष्मकर्म्मात्र कार्य्यम्।
रूपादीनां कुरुत नवभिः फालकैर्घातमस्मा-
न्मूलं लिप्तादि च विकलितात्पूर्व्ववच्छेषकर्म्म॥ ९॥

येषां येषां गुणनवशतो मूलमानेतुमिष्टं
ते ते हस्ताङ्गुलमुखमया ज्याकलाद्यात्मका वा।
अङ्का ग्राह्याः कृतिपदविधौ रूपलिप्ता विलिप्ता
रूपाद्यं स्याद्विकलितकृतेर्मूलमाप्तं खषड्भिः६०॥ १०॥

ऋज्वी वृत्ता समपृथुशिखा मध्यमूला नृयष्टि-
र्दैर्घ्यात्पा वाङ्गुलमिति मतो द्वादशांशः किलास्याः।

---

* लिप्तीभूतश्चतुर्गुणत्रियुतमूलहृत इत्यर्थः

किंवा कालानयनविधये शङ्कुमात्माङ्गयष्टिं
कृत्वा च्छायां कलयतु पुरोवर्त्तिनीं पादमध्यात् ॥ ११ ॥
मृत्पिण्डं वा स्वनयनसमोच्चाभ्रके बिभ्रदेत-
च्छायां चिह्नं किमपि विदधत् स्वाङ्गुलिभ्यां त्यजेत्तम् ।
यत्रैवासौ निपतति ततो यावदङ्घ्रं प्रमाता-
स्त्रेत्रोच्चद्वादशलवमितैरङ्गुलैर्भाभवेत्तु ॥ १२ ॥
छाया यस्माद्दिनकरतनूमध्यबिन्दोः सदेष्टा
तद्विम्बान्ते न्वणभुवि तमोऽभावतः सा न दृश्या ।
तस्मात्कर्णक्षितिविधुभुजां२११शेन युक्तैव कार्या
यद्विम्बार्द्धं शिवभुज२११गुणं मध्यकर्णोऽरुणस्य ॥ १३ ॥
शङ्कुर्नरः कोटिरुदीरितोऽत्र च्छायाप्रभाख्या भुज इत्यभिज्ञैः ।
श्रुत्याख्यमेतत् कृतियोगमूलं चेत्रं निरुक्तं खलु कर्म्मभूमिः ॥ १४ ॥
प्राक्पश्चात् खाङ्गा रेखा सममण्डलमुच्यते ।
निरक्षोर्द्ध्वगता या सा विषुवन्मण्डलाभिधा ॥ १५ ॥
व्यक्ते क्षितिजसंलग्नं ध्रुवद्वन्द्वयुतञ्च यत् ।
वृत्तमुन्मण्डलाख्यं तन्मेरोरुपरि संस्थितेः ॥ १६ ॥
विस्तृतानि निरक्षे तु तनूनि ध्रुवसन्निधौ ।
क्रमाद्युरात्रवृत्तानि प्राक्परायतभावतः ॥ १७ ॥
नाडीवृत्तं वैषुवतं प्रतिव्यपमुखाश्च ये ।
मण्डलास्तेऽपि लेख्याः स्युर्भूगोले ख इवाखिलाः ॥ १८ ॥
इष्टघस्त्राद्वजा भा चेत् शङ्कुमूलादुदक्स्थिता ।
तदा तद्विषुवच्छायान्तरमग्राभिधीयते ॥ १९ ॥
याम्यस्था चेद्युता साग्रा विषुवच्छायया मता ।
सममण्डलगे भानौ पलभैवोत्तराग्रका ॥ २० ॥

विषुवद्दिनमध्यस्थद्युमणेर्गगनार्द्धतः ।
नतिरक्षः पलस्तन्नोन्नतिर्लम्ब इतीर्य्यते ॥ २१ ॥
ध्रुवस्योन्नतिरक्षांशतुल्या लम्बसमा नतिः ।
अक्षभा पलभाच्छाया विषुवद्दिनमध्यजा ॥ २२ ॥
सू– शङ्क्वक्षभाहते त्रिज्ये पृथक्कर्णविभाजिते ।
लम्बाक्षज्ये तयोश्चापौ लम्बाक्षौ दक्षिणौ सदा । इति ॥२३॥
स्वदेशाक्षप्रभाज्ञानं वक्ष्ये सिद्धान्तसम्मतम् ।
दक्षिणोत्तररेखास्थो भुजो यः स्वदिनार्द्धजः ॥ २४ ॥
तेन संगुणिता त्रिज्या कर्णाप्ता तद्धनुःकलाः ।
नता मध्याह्नसूर्य्यस्य भुजे सौम्ये तु दक्षिणाः ॥ २५ ॥
याम्ये सौम्याः स्युरेताश्च क्रान्तिलिप्ताश्च भास्वतः ।
दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाः स्वाक्षलिप्तिकाः ॥ २६ ॥
सू– तज्ज्याक्षज्याथ तद्वर्गं प्रोज्झ्य त्रिज्याकृतेः ११८१९८४४ पदम् ।
लम्बज्याक्षगुणोऽर्क १२ घ्नो लम्बज्याप्तोऽक्षभा भवेत् । इति ॥२७॥
छायार्कानयनं वक्ष्ये स्वदेशे ये पलांशकाः ।
मध्याह्नार्कनतांशाश्च दिक्साम्ये तदन्तरम् ॥ २८ ॥
दिग्भेदे तद्युतिः क्रान्तिस्तज्ज्या त्रिगुण ३४३८ ताड़िता ।
परमापक्रमज्या १३७० प्ता भुजज्यास्या धनुःकलाः ॥ २९ ॥
ग्राह्यास्ताः सायनेऽजादौ कर्क्यादौ भार्द्धतश्च्युताः ।
तुलादौ भार्द्धसंयुक्ताश्चक्रादूना मृगादिके ॥ ३० ॥
ततोऽयनांशलिप्ताद्यैर्वैपरीत्येन संस्कृताः ।
भवन्ति स्वदिनार्द्धार्कभुक्तस्फुटग्रहादयः ॥ ३१ ॥
स्फुटार्कोनात् स्वमन्दोच्चात् फलं वामं स्फुटे रवौ ।
असकृद्धनहीनञ्चेत् स्यान्मध्यार्कः स्थिरत्वभाक् ॥ ३२ ॥

सू - स्वाक्षार्कापक्रमयुतिर्दिक्साम्येऽन्तरमन्यथा ।
स्युर्नतांशा रवेस्तेभ्यः साध्ये दोःकोटिमौर्विके । इति ॥ ३३ ॥
शङ्कुमानाङ्गुलाभ्यस्ते दोर्ज्यात्रिज्ये यथाक्रमम् ।
कोटीज्यया विभज्याप्तौ च्छायाकर्णावहर्दले ॥ ३४ ॥
उन्मण्डलस्थखेटस्य क्रान्त्योरुत्तरयाम्ययोः ।
क्षितिजोर्द्ध्वाधरस्थानो भवत्युन्नतजो नरः ॥ ३५ ॥
विषुवद्भापमज्याघ्नी कर्णाप्तोन्नतना भवेत् ।
त्रिज्योन्मण्डलशङ्कुघ्नी चरज्याप्ता च यष्टिका ॥ ३६ ॥
यष्टिरुन्नतशङ्क्वाख्या तदूनोत्तरयाम्ययोः ।
गोलयोः क्रमतः शङ्कुर्भवति स्वदिनार्द्धजः ॥ ३७ ॥
अथवा वक्ष्यमाणाख्या गुणितोन्नतशङ्कुना ।
चरज्याप्ता भवेच्छङ्कुरुदग्दक्षिणकाष्ठयोः ॥ ३८ ॥
सू—नतांशभुजकोटिज्ये दृग्ज्याशङ्कुज्यके मते ।
क्रान्तिज्या विषुवत्कर्णहताप्ता शङ्कुजीवया । इति ॥ ३९ ॥
अग्रा माध्याह्निकी सैव सौम्ययाम्यापमानुगा ।
स्वेष्टकर्णहता मध्यकर्णाप्ताग्रेष्टकालिका ॥ ४० ॥
किंवा मध्येष्टकर्णाभ्यां क्रान्तिज्या गुणिता पृथक् ।
लम्बज्याप्ता च मध्याग्रा स्वेष्टाग्रा भवति क्रमात् ॥ ४१ ॥
चलांशसंस्कृते भानौ मेषादौ गोल उत्तरः ।
तुलादौ संस्थिते याम्यः पुरोक्तोऽप्यत्र कार्य्यतः ॥ ४२ ॥
सौम्यगोले यदार्काग्रा विषुवच्छायतोऽधिका ।
तत्तयोरन्तरं याम्यभुजः स्याच्छङ्कुमूलतः ॥ ४३ ॥
न्यूना चेदन्तरं सौम्यो बाहुर्याम्ये तु गोलके ।
अक्षप्रभाग्रयोर्योगः सौम्यो बाहुर्दिनार्द्धजः ॥ ४४ ॥

समण्डलरेखायां यदा विशति शङ्कुभा।
तदा भाकर्णकालाः स्युः सममण्डलजा इति ॥ ४५ ॥
सममण्डलभा न स्याद्रवौ दक्षिणगोलगे।
अक्षाधिकेऽपमे सौम्ये न स्यात्तत्राल्पके भवेत् ॥ ४६ ॥
लम्बज्या विषुवद्भाघ्नी सौम्यक्रान्तिज्ययोद्धृता।
सममण्डलकर्णः स्यात् किंवाऽक्षज्यार्क१२ताडिता ॥ ४७ ॥
तत्क्रान्तिज्योद्धृता किंवा दिनार्द्धश्रवणाहता।
अक्षप्रभा दिनार्द्धाग्राहृता कर्णः स एव हि ॥ ४८ ॥
अक्षकर्णहता सौम्यक्रान्तिज्याक्षप्रभोद्धृता।
सममण्डलशङ्कुः स्यात्त्रिज्यावर्ग११८१९८४१जान्तरात् ॥ ४९ ॥
मूलं दृग्ज्या रवि१२घ्ना सा शङ्कुभक्ता भवेत्प्रभा।
त्रिज्या सूर्य्यहता तेन* भक्ता प्रागुदिता श्रुतिः ॥ ५० ॥
सू – स शङ्कुः स्वाक्षजीवाघ्नः परक्रान्तिज्यया१३७०हृतः। इति।
फलं छायार्कबाहुज्या तद्धनुर्भुजवन्द्रकम् ॥ ५१ ॥
ततः पूर्व्ववदानेयौ छायार्कस्फुटभास्करौ।
अथोच्यते कोणशङ्कोः सिद्धयेऽग्रज्यकादिकम् ॥ ५२ ॥
सू – स्वक्रान्तिज्या त्रिजीवा३४३८घ्नी लम्बज्याप्ताग्रमौर्व्विका।
स्वेष्टकर्णहता भक्ता त्रिज्ययाग्राङ्गुलात्मिका६६ ॥ ५३ ॥
खमध्यात् कोणरेखास्थसूर्य्यात् क्षितिजगामिनी।
कोटीज्या कोणशङ्कुत्वेनोच्यते तद्विलोमगा ॥ ५४ ॥
या विदिक्तत्र या च्छाया कोणच्छायेति सा मता।
सौम्यापमे स्वाक्षसमे न स्यातां कोणशङ्कुभे ॥ ५५ ॥

---

* सममण्डलशङ्कुना।

यदि मध्याह्नगो भानुर्दक्षिणस्यां नतस्तदा ।
कोणशङ्कुस्तदाग्नेय्यां नैर्ऋत्यां प्राक्पराह्नयोः ॥ ५६ ॥
स नतश्चेदुत्तरस्यां तदैशानमरुद्दिशोः ।
कोणशङ्कुप्रभाकर्णौ कोणाख्यं साध्यतां नतम् ॥ ५७ ॥
त्रिज्यावर्गार्द्धतो५८०८८२२ऽग्रज्यावर्गोनात्कृतवह्निभिः१४४ ।
निघ्नाद्भूवर्गदल७२युक्पलभा वर्गभाजितात् ॥ ५८ ॥
लब्धं तत्करणी नाम कर्म्मभूमौ निधायताम् ।
पुनरग्रज्यकार्क१२घ्नविषुवच्छायताड़िता ॥ ५९ ॥
द्वाद्रा७२ब्धेनाक्षभावर्गेणोद्धृताक्षफलं भवेत् ।
तद्वर्गकरणीयोगान्मूलमक्षफलोनयुक् ॥ ६० ॥
क्रमतः कोणशङ्कुः स्याद्दक्षिणोत्तरगोलयोः ।
मू - तत्त्रिज्यावर्गविश्लेषान्मूलं दृग्ज्याभिधीयते ॥ ६१ ॥
स्वशङ्कुना विभज्याप्ते दृक्त्रिज्ये द्वादशाहते६९ ।
छायाकर्णौ तु कोणेषु यथास्वं देशकालयोः । इति ॥ ६२ ॥
संस्कृतस्यायनांशैर्या भास्वतो बाहुमौर्व्विका ।
साप्यापक्रमजीवा१३७०घ्नी लम्बज्याप्तोदयज्यका ॥ ६३ ॥
यत्रोदयज्या भूरामसिद्धा२४३१ स्तत्रायनान्तगः ।
विदिक्ष्वूदयमस्तञ्च यात्यर्कौ विषुवे पुनः ॥ ६४ ॥
सर्व्वत्र पूर्व्वापरयोः समैर्व्वौः परितो भ्रमन् ।
कोणस्थे प्राङ्नतं यावत्तावत्प्रत्यङ्नतं रवौ ॥ ६५ ॥
क्रान्तिभाघटिकाग्राद्यं सर्व्वं पूर्व्वं दिनार्द्धजात् ।
भानोः संसाध्यतत्कालप्रभवात् पुनरानयेत् ॥ ६६ ॥
अभीष्टकालतश्छाया च्छायातः काल उच्यते ।
यज्ज्ञानाज्जन्मयात्रादौ सलग्नाः स्युर्ग्रहाः स्फुटाः ॥ ६७ ॥

इष्टकालनतासुभ्यो योत्क्रमज्या प्रसाध्यते।
सा नतोत्क्रमजीवेति ज्ञेया वासरभागयोः॥ ६८॥
त्रिज्याचरज्या हीनाढ्या दक्षिणोत्तरगोलयोः।
अन्त्या नतोत्क्रमज्योना सोन्नतज्याभिधीयते॥ ६९॥
स्वाहोरात्रार्द्धकर्णेन गुणिता सा त्रिजीवया।
विभक्ता चेद्भवेच्छेदो लम्बज्याघ्नः स भाजितः॥ ७०॥
त्रिभज्यया भवेच्छङ्कुस्तद्वर्गपरिशोधितात्।
त्रिज्यावर्गात् पदं दृग्ज्या छायाकर्णौ तु पूर्व्ववत्॥ ७१॥
सू—अभीष्टच्छाययाभ्यस्ता त्रिज्या तत्कर्णभाजिता६८।
दृग्ज्या तद्वर्गसंशुद्धात्त्रिज्यावर्गाच्च यत्पदम्॥ ७२॥
शङ्कुः स त्रिभजीवाघ्नः स्वलम्बज्याविभाजितः६९। इति।
किंवाक्षकर्णगुणितः सूर्य्या१२प्तश्छेदसंज्ञकः॥ ७३॥
स त्रिज्याघ्नो द्युजीवाप्त उन्नतज्या तयोनिता।
स्वान्त्या नतोत्क्रमज्या स्यात्तस्याश्चापं नतासवः॥ ७४॥
स्ववासरदलप्राणास्तदूनाश्चोन्नतासवः।
रसो६द्धृता विनाड्यः स्युः प्राक्पश्चिमकपालयोः॥ ७५॥
प्रदर्श्यते विशेषोऽत्र यद्यल्पा सप्तविंशतेः।
भवेन्नतोत्क्रमज्या तदन्त्या वर्गात्परित्यजेत्॥ ७६॥
उन्नतज्याकृतिं शेषान्मूलं त्रिज्यान्त्यजीवयोः।
योगार्द्धेन हृतं भज्यादन्त्यया स्युर्नतासवः॥ ७७॥
नतोत्क्रमगुणस्त्रिज्याधिकश्चेत्त्रिज्ययोज्झितः।
शेषात् क्रमगुणाच्चापस्त्रिज्याचापा५४००न्वितोऽसवः॥७८॥
एवं नतासवस्त्रिज्याधमुषो५४०० यदि चाधिकाः।
तदा तदूनिताः शेषात् क्रमज्या त्रिज्ययान्विता॥ ७९॥

स्यान्नतोत्क्रमजीवाथ प्राक्सिद्धा ये नतासवः ।
स्वाहोरात्रासु गुणिताः सूक्ष्माद्यक्रासुभि२१६००र्हृताः ॥८०॥
छायार्कस्याप्यथाग्रातः सममण्डलशङ्कुतः ।
वच्चाम्यानयनं स्वाग्रागुणिता लम्बमौर्व्विका ॥ ८१ ॥
इष्टकर्णाङ्गुलैर्भक्ता क्रान्तिज्यातो भुजज्यका ।
ततः प्राग्वत्पदैश्छाया सूर्य्योऽंशैरायनैः स्फुटः ॥ ८२ ॥
त्रिभजीवा३४३८र्क१२गुणिता समविम्बश्रवो हृता ।
सममण्डलशङ्कुः स्यात् सोऽभ्यस्तः स्वाच्चजीवया ॥ ८३ ॥
परमापक्रमज्या१३७०ग्नः फलं भानोर्भुजज्यका ।
ततः केन्द्रं ततश्छाया रविः प्राग्वदसौ स्फुटः ॥ ८४ ॥
छायाभ्रान्तिपथो निरूप्यत इह प्राज्ञैः समे भूतले
वृत्ते यत्तलशङ्कुना न घटते सर्व्वत्र तत्सर्व्वदा ।
गोले तद्घटना भविष्यति यतस्तस्मिन्मया वक्ष्यते
रात्रेः काल इहोच्यतेऽथ भयुतौ वक्तव्यताराध्रुवैः ॥ ८५ ॥
मध्ये व्योमगतैर्यदृक्षवशतो निश्चित्य मध्यां तनुं
तां संस्कृत्य चलांशकैर्गतघटीरानीय रात्र्यर्द्धजात् ।
सूर्य्याक्रान्तचलांशसंस्कृतगृहाद्भोग्या घटीर्मध्यजा-
स्तद्युग्मान्तरभुक्तमध्यभघटीः संयोज्य सर्व्वास्ततः ॥ ८६ ॥
प्रोज्झ्यार्कद्युदलञ्च शिष्टघटिका रात्रौ गताः स्युर्दिन-
स्यार्द्धेनाथ युता भवन्त्युदयतः सूर्य्यस्य ता निर्गताः ।
इत्थं मध्यभभोग्यकालतपनाक्रान्तर्क्षभुक्तान्तर-
क्षेत्राणाञ्च युतिर्दिनार्द्धरहिता स्यादेष्यकालो निशः ॥ ८७ ॥
काल्लाद्यद्यपि लग्नसिद्धिरुदिता भूयोऽत्र कौतूहलाद्-
याम्योदग्वलयोर्द्युगोद्भवशतो दृग्दृक्२२चलांशस्फुटाः ।

ये प्रागुत्कलदेशजानि गदिता लग्नास्तदीयान्यहं
वक्ष्ये भुक्तपलान्यतः प्रमुदिताः स्युर्योगताराविदः ॥ ८८ ॥
यन्नक्षत्रगतार्कवासरदले यः स्याद्दिलग्नः स्फुट-
स्तस्मिन् भे गगनार्द्धगे स हि भवेत्तत्सप्तमोऽस्तं व्रजेत् ।
विष्णौ(२२) खाङ्कगतेऽजलग्नजपलान्यम्भोधिनन्दा९४ धने(२३)
तस्मात् खाङ्कतयः२२० प्रचेतसि(२४) वृषा-
द्गोमाष्टनेत्राणि२८० च ॥ ८९ ॥
प्राग्भाद्रे(२५)ऽब्धिदृग्गो२४ व्रजन्ति मिथुनात्तस्मादहिर्बुध्न्यभे(२६)
वेदाद्रिक्षितयो१७४ऽथ कर्कटतनोः पौष्णे(२७) नवाम्भोधयः४९ ।
अश्विन्यां(१) खरवासवा१४७स्त्र यमभे(२)-
ऽङ्गार्थाश्विनो२५६ऽथाग्निभे(३)
सिंहादद्रिरसा६७ विधौ(४) खरघना१७७-
श्चन्द्रे(५) स्त्रिया लोचने२ ॥ ९० ॥
रौद्रे(६)ऽस्याः करिमार्गणा५८ अदितिभे(७)
द्वे२ तौलितोऽस्माद्गुरौ(८)
वेदेन्द्रा१४४ भुजगे(९) ततोऽब्धिधृतयः१८४
पित्र्ये(१०) रदाः३२ कीटतः ।
योना(११)वद्रिनवेन्दवो१९७ऽर्थ्यमसुरे(१२)
पञ्चाष्टपक्षा२८५स्ततो
हस्ते(१३) चापत ईक्षणर्त्तव६२ इभा-
ङ्कचोणय१९८स्त्वष्टरि(१४) ॥ ९१ ॥
स्वातौ(१५) नक्रतईक्षणेन्दव१२इतः शक्राग्निभे(१६) पञ्चभूः
मैत्रे(१७)ऽङ्गाङ्गदृगो२६६ मघोनि(१८) घटतो-
ऽद्र्यङ्गानि६७ मूले(१९) ततः ।

स्मारव्यचोणि२३१ जले(२०)ऽब्जजात् खवसवो८०
वैश्वे(२१)ऽक्षिवाणेन्दवो१५२
यातानागतभास्वरात्तनुपलस्वर्णत्वमालोच्यताम् ॥ ९२ ॥
सत्सिद्धान्तशिरोमणौ यदवदद्युत्पत्तये भास्करः
क्षेत्राणां भुजकोटिकर्णघटनां नानाविधां सूक्तिभिः ।
यत्प्रश्नोत्तरविस्तरेण गणितं दिग्देशकालाप्तये
तद्व्याख्यासहितं यतोऽस्ति हि मया तत्प्रोज्झि वाग्गौरवात् ॥९३॥
सिद्धान्तप्रचयादलम्भि मयका यो यो विशेषो दृशा
तुल्यस्तल्लिखितं मदिष्टमिह तत्तत्साङ्गतासिद्धये ।
सर्व्वग्रन्थकृतिर्बभूव गणिते गोलान्विते ह्यद्य ते
क्षेत्राणामुपपत्तयो हि सुलभास्तत्किं वचोविस्तरैः ॥ ९४ ॥
यत्राष्टाब्धिकलाढ्यनन्दकु१९।४८लवैरक्षः समक्षीकृतो
व्यक्षात् सार्द्धरसर्त्तकैः२७६।३० खखभुजै२००र्भूमध्यरेखाङ्कतः ।
सिद्धं योजनकैः स्वदेशविवरं तत्रासिताद्रौ शल-
श्रीलेलाकमलाविलास्थलमलंकुर्य्यान्मदीयं मनः ॥ ९५ ॥

इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-
श्रीचन्द्रशेखरकृतौ गणितेऽक्षिसिद्धे ।
सिद्धान्तदर्पण उपाहितबालबोधे
त्रिप्रश्नवान्मुनि७मितः शमितः प्रकाशः ॥ ९६ ॥

इति श्रीचन्द्रशेखरसिंहकृतौ सिद्धान्तदर्पणे त्रिप्रश्नाधिकारे
शङ्कुच्छायादिवर्णनो नाम सप्तमः प्रकाशः ।

—

## अष्टमः प्रकाशः।

### चन्द्रग्रहणवर्णनम्।

स्मार्त्ताः सांहितिकाः पुराणनिपुणास्तन्त्रेचका वैदिकाः
स्नानार्च्चाजपहोमदानकृतिनां यस्मिन्ननन्तं फलम्।
प्रोचुर्यश्च महाचमत्कृतिकरो लोकस्य तिथ्यादिके
विश्वासावहमिन्दुतिग्ममहसोर्वच्म्याम्यहं तं ग्रहम्॥ १॥

पर्वान्तसाधितविपातविधोर्भुजांशा
विश्वा१३ल्पका यदि तदा ग्रहसम्भवोऽस्य।
तस्माद्विधौ शिखितमोऽन्यतरान्तिकस्थे
चिन्त्यो ग्रहोऽग्निकु१३लवावधि पूर्णिमान्ते॥ २॥

सूर्य्यग्रहो धृति१८लवान्तममान्तजेऽङ्गे
ग्रस्तो मतोऽन्तिकवशात् शिखिना गुनेति।
प्रत्यक् पुरो नतगुणांशयुतोनसूक्ष्म-
दर्शास्तकालिकसुधाकरदिक्शरस्य॥ ३॥

तत्कालवित्रिभतनूनतबाहुजीवा
षष्ठ्यंशकस्य च युतेर्वियुतेश्च शेषात्।
दिक्साम्यभेदजनुषः क्रमशः स्फुटेषौ
न्यूने कृताग्नित३४ इनग्रहसम्भवः स्यात्॥ ४॥

सत् क्वापि याम्यनतिभूरितयोत्तरेषौ
सार्द्धांशके१।३०ऽपि स भवेदपि निःशरत्वे।
न क्वाप्यथो नयनमण्डलगेऽपवृत्ते
स स्याद्विपातशशिदोष्णिनगां७शतोऽल्पे॥ ५॥ इति ग्रहणसम्भवः।

पर्वान्तसंस्कृतिरवीन्दुसमीकृतीन-
भूभाविधुप्रमितिबाणपिधानकालैः।

सल्लम्बनावनतिदिग्वलनाङ्गुलाद्यैः
शास्त्रान्तरादिह विशेषमवेत सन्तः ॥ ६ ॥
राकामयो रवसितिप्रभवोच्चमध्य-
सिद्धे विधौ तपनभाद्दिवाकराभ्याम् ।
न्यूनेऽधिकेऽन्तरपराः प्रथमेन्दुसूर्य्य-
भुक्त्यन्तरेण विहृता विघटीफलेन ॥ ७ ॥
तिथ्यन्त आव्यवियुतः समपर्व्वकाल-
स्तात्कालिकार्कभदलञ्च रविश्च सूक्ष्मः ।
वेद्यः शशी समकलाविति तौ भवेतां
किञ्चोच्यते क्वचन पर्व्वणि तद्विशेषः ॥ ८ ॥
सूर्य्यस्य दोर्गतिफले उदयान्तरञ्च
यद्येकदा त्रितयमेतदृणं धनं स्यात् ।
तत्रोदयान्तरभुजान्तरके सुधांशो-
र्भास्वद्गतेः फलयुतैर्विकलास्ततस्ताः ॥ ९ ॥
शीतांशुदोःफलकला गुणिता विभक्ता-
स्तद्ग्रासयोजनचयेन४४ च पूर्णिमायाम् ।
दर्शे हृतास्तु रवियोजनकै७२००विलिप्ता
लब्धाश्च ताः पुनरिनेन्दुगतान्तराप्ताः ॥ १० ॥
दण्डादिकैरिह फलैः समपर्व्वयुक्त-
मूनं पुरोदितफलत्रितयर्णतायाम् ।
स्वत्वे क्रमाद्भवति दृक्सममत्र कार्य्या
सूर्य्याब्जयोः समकलीकृतिरुक्तपूर्व्वा ॥ ११ ॥
द्विसप्ततिसहस्र७२०००योजनमितार्कविम्बायति-
र्महापुरुषवाचयेत्यनुजगावथर्व्वा श्रुतिः ।

मयैतदनुसारतो नयनगोचरर्क्षग्रह-
प्रमाणपरिधिग्रहादिकमकश्मलं कल्प्यते ॥ १२ ॥
विवस्वद्विष्कम्भद्विरसविधु१६२भागः समुदितो
विधोर्विम्बव्यासः क्षतक्षतचतु४४४र्योजनमितः ।
भुवः प्राग्दिष्टः१६०० स च सवितुरर्थाम्बुधि४५लवो-
ऽन्तरीचे वच्येऽहं श्रवणमथ भानोः शशभृतः ॥ १३ ॥
भूमध्यात्स्वदलावधि ग्रहपतेः कर्णाख्यमार्गस्त्वतु-
र्नन्दद्विद्विपपूर्णतर्कधरणीभृद्७६०८२८४योजनो मध्यमः ।
शीतांशोः शरपुष्करच्चितिधरस्तम्बेरमाम्भोधयो४८७०५
मध्यस्य श्रुतियोजनान्यथ तयोः स्पष्टा भवेन्मन्दजा ॥ १४ ॥
भास्वन्मण्डलयोजनानि७२००० गुणभूपत्ताच्चि२२१३भक्तानि चे-
द्बिम्बव्यासकला३२।३२ भवन्ति सवितुर्मध्या निशास्वामिनः ।
तान्येवर्त्तु६गुणानि पञ्चकरिभि८५र्भक्तानि चेन्मण्डल-
व्यासस्यापि कला३१।२० भवन्ति धरणीच्छायाकलाश्चन्द्रवत्॥१५॥
मन्दकोटिफलयुक्तदूनिता
नक्रकर्किमुखमन्दकेन्द्रके ।
त्रिज्यका भवति संस्कृता तया
वर्जिता द्विगुणितत्रिमौर्विका६८७६ ॥ १६ ॥
शेषकेण विहृतात्त्रिभज्यका-
वर्गतः११८१८८४ फलकलात्मकः स्फुटः ।
मन्दकर्ण इनचन्द्रयोः क्षिति-
र्मध्यतोऽन्यखसदां रवेर्भवेत् ॥ १७ ॥
मन्दकर्णहतयोजनश्रुतिस्त्रिज्यया किल हृता भवेत् स्फुटा ।
मध्यकर्णहतविम्बलिप्तिका स्पष्टकर्णविहृताः परिस्फुटाः ॥ १८ ॥

सिद्धान्तशिरोमणौ— मन्दश्रुतिर्द्राक्श्रुतिवत्प्रसाध्या
तया विभज्याद्विगुणा६८७६ विहीना।
त्रिज्याकृतिः११८१९८४४ शेषहृता स्फुटा स्या-
ल्लिप्ता श्रुतिस्तिग्मरुचेर्विधोश्च ॥ १९ ॥
लिप्ताश्रुतिघ्नस्त्रिगुणेन भक्तः
स्पष्टो भवेद्योजनकर्ण एवम्।
बिम्बं रवेर्द्विद्विशरर्त्तु६५२२सङ्ख्या-
नीन्दोः खनागाम्बुधि४८०योजनानि। इति ॥ २० ॥

भास्करोक्तमृदुकर्णसाधनं यद्यपि स्फुटतमं तथाप्यहम्।
प्राह कोटिफलतो भुजान्तभाग्बिम्बमध्यसमतार्थमेव हि ॥ २१ ॥

मध्यमार्कशशिबिम्बजाः कलाः
सूक्ष्मतत्प्रथमभुक्तिताडिताः।
मध्यभुक्ति५९।८।७९०।३५विहृताः खमण्डल-
द्वन्द्वविस्तृतिरदः फलानि वा ॥ २२ ॥

किं वा बिम्बास्त्रिगुण३४३८गुणिता योजनैः स्वैर्मितानां
स्वश्रुत्याप्ताः स्फुटतरकलाभानुभूभाविधूनाम्।
यद्वा भास्वद्गतिफलखरुद्रां११०शयुक्तोनितास्ता
मध्याः३२।३२ स्पष्टाः स्युरिनकलिकाः कर्किनक्रादिकेन्द्रे ॥ २३ ॥

मध्यं मानं३१।२० गतिफलकलापञ्चविंशांशकस्य
त्यागाद्योगात् स्फुटविधुमितिर्नक्रकर्क्यादिके स्यात्।
रुद्र११घ्नी वा स्फुटरविगतिः खाच्चि२०भक्तार्कमानं
सप्तोनेन्दुस्फुटगतिकलास्तत्त्व२५भक्ताः स्वमानम् ॥ २४ ॥

भूव्यास१६००निघ्नः स्फुटसूर्य्यकर्णो
भूव्याप्तहीनार्कतनू७०४००विभक्तः।

फलं तदा मूलशिखान्तदैर्घ्यं
सूचीनिभायाः पृथिवीप्रभायाः ॥ २५ ॥

शिरोमणौ—भूव्यासहीनं रविबिम्बमिन्दु-
कर्णाहतं भास्करकर्णभक्तम् ।
भूविस्तृतिर्लब्धफलेन हीना
भवेत् कुभाविस्तृतिरिन्दुमार्गे । इति ॥ २६ ॥

तन्मानलिप्ताः शशिवत्प्रसाध्याः
किंवा नगां ७ घ्नः शशभृद्गतिर्यः ।
सोऽष्टाद्रि ७८ निघ्नेषुमनू १४५ द्धृतार्क-
गत्यूनितः स्यात्तमसः प्रमाणम् ॥ २७ ॥

भूभा विधुं चन्द्र इनं पिधत्ते यदा तदैव ग्रहणं तयोः स्यात् ।
पाताख्यराहोर्भुजसन्निकर्षात्तस्यासुरग्रास इति प्रशस्तिः ॥ २८ ॥

शिरोमणौ—दिग्देशकालावरणादिभेदा-
न्न च्छादको राहुरिति ब्रुवन्ति ।
यन्मानिनः केवलगोलविज्ञा-
स्तत्संहितावेदपुराणवाह्यम् ॥ २९ ॥

राहुः कुभामण्डलगः शशाङ्कं
शशाङ्कगश्छादयतीनबिम्बम् ।
तमोमयः शम्भुवरप्रदानात्
सर्व्वागमानामविरुद्धमेतत् । इति ॥ ३० ॥

प्रभा भुवो भ्राम्यति भानुभार्द्धे तद्भमभ्ये यदि शुभ्रभानुः ।
जम्भद्विषद्दिङ्मुख एति वेगात्तच्चन्द्रः सातपबिम्बलोपात् ॥ ३१ ॥
भूभानुमध्ये यदि शीतभानुर्गच्छन् रविं छादयति प्रतीच्याः ।
भास्वद्ग्रहस्तद्द्वितयस्य पूर्व्वयानेऽपि शुभ्रांशुगतेर्महत्त्वात् ॥ ३२ ॥

प्रग्रीवं सोर्ध्वभागं शिखरमृजुतरं मञ्जरीं मञ्जुलाभां
भित्तिं ध्वस्ताघभीतिं वितनुतनुगृहान् वक्रशालां विशालाम् ।
पीठं शिष्टाभिजुष्टं गृहमतिविततं श्रीजगन्मोहनाख्यं
भोगार्थं मण्डपञ्चाद्भुतमवनिधवस्याश्रये प्रश्रयेण ॥ १५ ॥
प्रेङ्खन् शङ्खस्य नाभौ सततगतिवशाद्वाहुदण्डैः प्रचण्डैः
शाखाभिश्चण्डरोचिस्तनुजनिजजनान् वारयन् किं विदूरात् ।
कल्पान्तेऽप्यन्तहीनः सकलकलुषहृत् सिन्धुराजोऽधिरोधो-
न्यग्रोधः क्रोधकामाद्यरिपरिभवकृद्भूतवर्गस्य भूयात् ॥ १६ ॥
भद्राभूमाधवश्रीमुषलभृदरिभिः शोभितः श्रीवपुष्मा-
नस्मानुष्णांशुजोऽथागमशमनघनः पातु देवाधिदेवः ।
जन्तुर्मन्तून्निहन्तुं प्रभवति शतशोऽङ्काय यन्नाम गृह्णन्
पश्यन् भ्रश्यत्त्ववश्यं विषयजलनिधौ नैव यं दैवभृत्यः ॥ १७ ॥
सार्द्धं येनेन्दुपद्माद्यखिलमुपमितिद्रव्यमासीत्कृतार्थं
विद्वद्भिर्वर्ण्यमानं यदनुमितिकृतः कृत्रिमं विश्वमाहुः ।
शब्दब्रह्म प्रमाणं यदवयवजनैर्योऽसकृन्नारदाद्यैः
साक्षाल्लक्ष्योऽपि साक्षी भवति नवनवः श्रीधवः सोऽवतान्नः॥१८॥
द्रव्यैर्जातूपमानं न भवति कृतिनां प्राकृतैर्जातदोषं
सर्वान्तर्यामिभावाद्द्युतिमति कृतिभिर्यस्य लोकोत्तरस्य ।
व्यक्ताव्यक्तेषु सत्त्वेष्वपरिमितनिजव्याप्तिमुद्व्यक्तुकामः
स्तम्भाद्यो दिव्यसिंहोऽभवदिह च महादारुदेहः स नोऽव्यात्॥१९॥
पारावारप्रतीरप्रथितवटमहापादपस्पर्शनाशा-
प्रोद्यत्प्रासादपीठार्पितविपुलवपुः पाण्डुपद्मोपमाक्षः ।
पूर्णप्रेमप्रदानप्रवण उपनिषत्प्रार्थ्यमानानुनम्रः
पापौघान्मां पुनीयात्पतितपतिमयं पूतनाप्राणपायी ॥ २० ॥

अथ श्रीजगन्नाथस्य द्वाभ्यां समुद्रसाम्यम् ।

लक्ष्मीभृन्नागसङ्घाम्बुवखनिरशनिभासितक्ष्माभृदीश-
स्थानं स्वर्गापगायाः प्रभुरखिलनृणां पापसन्तापहन्ता ।
श्यामश्रीर्मीनकूर्म्माद्यमिततनुंधरः शङ्खचक्राब्जवाहः
कल्पान्तग्रस्तलोकः कलयतु कमलं तीर्थराट् क्लान्तिशान्त्यै ॥२१॥
यत्रास्ते सानुबिम्बोदितसितकिरणप्रोज्ज्वलं नेत्रयुग्मं
नासाबाहूदराङ्घ्रि स्फुरति च विविधद्वीपशोभानुकारि ।
वारीव श्यामलश्रीर्मकरसुरुचिरे कुण्डले बाड़वाग्नि-
ज्वालेवोद्यत्किरीटं तरणिवदधरः सोऽस्तु शान्त्यै कृपाब्धिः ॥२२॥

अथैकेन ब्रह्माण्डसाम्यम् ।

बिभ्रद्वृत्तचपेशौ नयनयुगमिषाद्भ्रशोभामदभ्रां
शुभ्रश्रीर्वक्त्रदम्भादधरपुटरुचिव्याजतः सान्ध्यवेलाम् ।
तिर्य्यग्विस्तीर्णवृत्तातुलभुजवलयच्छद्मनश्चक्रवालं
शैलं मध्यच्छलात्काञ्चनमुपचिनुताद्विश्वभर्त्ता शुभं नः ॥ २३ ॥

एकेन शिवसाम्यम् ।

भूतेशो भूतिभूमिर्भवजभयभरोद्भेदभेदिप्रभावो
भूयाद्भोगीन्द्रभोगाभरणवपुरभीभावदो भूतभूतिः ।
भूभृद्भूमीन्द्रमौलिर्भृतवरकमलो गौरभा भेशभङ्ग-
प्रभ्राजद्भालभित्तिर्वृषभरणचणः सत्यदम्भाभिसन्धिः ॥ २४ ॥

एकेन गौरीसाम्यम् ।

सर्व्वाराध्या सितक्ष्माधरपरमयशोभूतिविख्यातिहेतु-
र्माता लोकस्य दृप्यन्मधुवधमुदितादित्यगीतप्रशस्तिः ।
पाताच्चण्डादिदैत्याभिभवनखररुक् चन्द्रकान्तोत्तमाङ्ग-
श्रीरस्मान् सर्व्वदोमेश्वर उदितरतिः केलिकान्ताङ्गसंभृत् ॥ २५ ॥

वाग्देवीसाम्यम् ।

श्रीमद्गौराम्बराडम्बररुचिरपयोराशिशिल्यङ्गलक्ष्मी-
लक्ष्मीशेनादृताङ्गस्फुटतमसुमनःसङ्गतिर्वाङ्गताङ्घ्रिः ।
ब्रह्मानन्दैकभूमिर्भ्रमशमनपटुः स्वाश्रितानामविद्यां
भिद्यादस्थूलदेहाहितसकलजगद्गौरमेयस्थितिर्नः ॥ २६ ॥

गणेशसाम्यम् ।

हस्तोद्यत्पुष्करश्रीः श्रुतिशिखरधृतोन्मत्तचित्तालिलेखो-
ऽलङ्कर्त्ता चाममध्यस्त्रिपुरहरतनूदक्षपक्षस्य रक्ष्यात् ।
सद्योऽविद्यान्धकारात्परशुधरपुरस्कार्य्यदुर्वार्य्यवीर्य्यो
देवः श्रीपार्व्वतीवाग्विधिविततयशाः स्वर्गवर्गाग्रपूज्यः ॥ २७ ॥

सूर्य्यसाम्यम् ।

छायाकान्तः कृतान्तार्च्चितचरणयुगः पाणिराजत्सरोजः
स्वाग्रोद्यद्वैनतेयो रजनिचरसुखोच्छ्रायविच्छेददक्षः ।
स्वच्छानन्ताङ्कलीलः क्षयिततमतमाः सर्व्वतेजोऽभिभावी
कालिन्द्यानन्दकन्दः प्रमुदितकमलः पातु पङ्काद्धरिर्नः ॥ २८ ॥

विशेषणैर्नवग्रहसाम्यम् ।

पद्मानन्दैकसद्मामृतनिधिरवनीनन्दनश्चन्द्रवंशो-
त्तंसः स्वर्गेशवर्गेड्तिचरणयुगः सत्कविस्त्वाश्रयश्च ।
पत्रीभूतोरुपत्री जननयनचयागोचरो नोचकेतु-
र्ज्योतिष्मानच्युतोऽस्मानवतु भवभयादाशुविश्वग्रहात्मा ॥ २९ ॥

वन्दे वन्दारुवृन्दारकनिकरशिखारत्ननक्षत्रराजी-
रज्यत्पादारविन्दस्फुटनखरविधुध्वस्तचेतस्तमस्कम् ।
कोटिक्रोडाण्डभाण्डप्रकटगुणघटैः सेवितं स्वावतारैः
श्रीमद्गोविन्दमिन्दीवररुचिरतनूमिन्दिरानन्दकन्दम् ॥ ३० ॥

अथ दशावतारस्तुतिः ।

मीनोऽलीनो नदीनोदर उषितऋषिव्रातगोत्रातरीस्थं
त्रातुं सत्यव्रतं वातरदिह सुमहाहार्य्यसन्दोहदेहः ।
वेदोद्धाराय योऽह्ना व्यधितवधमदश्वीरवत्रारिशत्रो-
स्त्राणं तापत्रयान्नस्त्रिपुरहर पुरस्कारपात्रं तनोतु ॥ ३१ ॥
कूर्म्मोऽशर्म्मोपनिर्म्मोचयतु रयभरभ्रान्तमन्थस्थिराभ-
ङ्गूरिग्रावाग्रसङ्घट्टनघटितमहापृष्ठकण्डूतिसौख्यः ।
यत्सङ्कोचच्छलेनोच्छलितचलहृदां मीलनं स्वाश्रितेभ्यो-
ऽनर्थेभ्यः प्रोत्थितास्येन च पवनसमुत्थानमर्थापयन्नः ॥ ३२ ॥
कोलः कोलं कुगोलं दधदधिजलधीवाध उद्धृत्य दन्त-
प्रान्तेऽशान्ते दुरन्ते प्रथमदितिसुते वृद्धदुर्द्धर्षयुद्धैः ।
देयादायासहीनो द्रुहिणहरिहयाद्यादितेयार्हणीयः
श्रेयादाम्नायगेयक्रतुनिचयमयामेयकायः श्रियं नः ॥ ३३ ॥
अङ्गःसङ्गं नृसिंहो भवतु भवहरोऽह्नाय संहर्त्तुमर्हो
गर्ह्यन्निर्ह्रादवृन्दैः प्रलयजलधरध्वानधारासमृद्धिम् ।
अत्यान्तस्वीयभक्तात्यतिरमरपराध्यत्ववक्षःकवाट-
क्षोभप्रत्यर्थ्यमाणक्षतजभृतनखो लक्ष्यलक्ष्मीकवक्षाः ॥ ३४ ॥
खर्व्वीकुर्व्वीत दर्व्वीकरभुवनकगीर्व्वाणवर्गालयोर्व्वी-
गर्व्वानर्व्वाक्सुपर्व्वार्य्यवनिधवमहासम्पदं लुम्पमानः ।
व्यापद्व्रापत्त्रयं पत्त्रितयरयभरादर्थनाव्याजखर्व्वः
सर्व्वं शर्व्वादिसेव्यः स्रवदमरधुनीनीरपन्नीरजो यः ॥ ३५ ॥
षष्ठः क्ष्माप्रेष्ठगोष्ठीकुठगणलुठनाकुण्ठतेजःकुठारः
श्रीवैकुण्ठावतारः कठिनरणधुराट्टष्टषष्ठीशपृष्ठः ।

तिष्ठन् कण्ठीरवाभोऽर्जुनसुभटघटाघोरमातङ्गयूथे
घोरः कष्टानि निष्ठेवयतु भृगुभुवां नीलकण्ठाङ्घ्रिनिष्ठः ॥ ३६ ॥
रामः श्यामाब्जधामा शमयतु स ममाशर्म्म घर्म्मांशुवंशो-
त्तंसः संसारहिंसावहमहिममहाम्भोधिरम्भोजनेत्रः ।
श्रीगण्डश्चण्डीशकाण्डासनवरदलने दण्डकारण्यचारी
हारी वारीशतारी सुरपरविसरप्राणहारीषुधारी ॥ ३७ ॥
ऊर्ज्जेन्दुज्योतिरूर्ज्जस्वलविमलहराहार्य्यरुग्जैत्रगात्रः
सद्यः प्रोद्यद्दिनेशभ्रमदमदभराघूर्णितास्तीर्णनेत्रः ।
प्रत्यग्राम्भोदवृन्दप्रतिभटपटभृद्भूरिभास्वद्विभूषो
भूयाद्भूगोलभारी भवभयभरभिद्रामभूर्भेदनो नः ॥ ३८ ॥
अध्यात्मध्यानवद्वादरविधृतधृतिर्ध्वस्तशुद्धाध्वराध्व-
ग्रद्धः क्रोधादिरोधाद्विधिविहितवधासाधुतासिद्धबोधः ।
दध्याद्बुद्धाभिधानो मगधधरणिभृल्लब्धजन्माधिदेवो
बाधाब्धुद्धारधूर्य्यां धियमधनधनं धर्म्मधारां धरन्नः ॥ ३९ ॥
निर्द्धूलीधूमधाराधरनिकरनभोमध्यविद्योतमान-
द्योतप्राग्भारभास्वद्भ्रमकरकरयुग्मण्डलाग्रप्रचण्डः ।
स्वाधाराधीरघोरोद्धुरतुरगखुरक्षोदितक्षोणिरेणु-
च्छन्नच्छायेश ईशो दिशतु दशमको म्लेच्छविच्छेदकृच्छम् ॥ ४० ॥
मत्स्याद्याकल्किरूपं दशविधतनुभाक्सिद्ध२४संख्यात्ममूर्त्ति-
र्द्वात्रिंशद्गात्रधर्त्ता जगदुपकृतये कृप्तनानावतारः ।
भागांशाद्यैर्विभेदैः परिचरितपदद्वन्द्व इन्द्राश्मकान्तिः
कृष्णस्तृष्णानृताब्धेः सृजतु नृजनिजाद्दुष्कृतान्निष्कृतिं मे ॥ ४१ ॥
या लीला गोकुलान्तर्मधुपुरि रचिता याः कृता द्वारवत्यां
चित्यां नित्यावतारैः प्रतियुगमुचिताः सूचिताः प्राङ्मुनीन्द्रैः ।

स्तास्ता विस्तारयन् यो वसति श्रितिगिरौ वेदवेद्योऽवतारो
नित्ये धाम्नि स्वनाम्नि स्फुरतु मुररिपुः सोऽयमन्तः सदा नः॥४२॥
योऽसौ सर्व्वत्र पूर्णोऽप्यसितगिरिदरीकेशरी योऽप्यरूपः
पद्मप्रद्युम्नरूपोऽप्यणुरतनुतनूसंभृताशेषलोकः।
निस्त्रैगुण्योऽप्यगण्यामलगुणनिलयो वाङ्मनोऽतीतधामा
मातृकचर्म्माक्षिलक्ष्यः स्फुरतु मनसि नश्चित्रसिन्धुर्मुकुन्दः॥ ४३ ॥
माधुर्य्यैश्वर्य्यपूर्णः श्रितिधरपरमव्योमगोलोकनाथः
श्रीभूलीलादिसेव्योदरकमलगदाचक्रभृद्वेणुपाणिः।
भुक्तेर्मुक्तेश्च भक्ते वितरणनिपुणश्चिद्घनानन्दमूर्त्तिः
सर्व्वव्यापी परात्मा स भवतु भगवान् ब्रह्मभूतिर्गतिर्नः॥ ४४ ॥
राजन् प्रासादराजे वृजिनवनरुजाकुञ्जरः कुञ्जपुञ्जे
मञ्जौ सञ्जातशातव्रजयुवतिजनान् रञ्जितान् व्यञ्जयन् यः।
गर्ज्जत्पर्ज्जन्यराजिप्रतिभटलवणाम्भोधिकूलस्थनील-
क्ष्माभृद्भूसार्व्वभौमः स भवतु भविनां भूतये देवराजः॥ ४५ ॥
कंसाकर्षक्रियाक्लृप्तकनकवसनकः कुञ्जकेलीकलापी
केशोद्यत्केकिपिच्छः क्षतकलिकलुषक्लेशशक्तिः कृतज्ञः।
कल्पाक्रान्तत्रिलोकीकवलनकलितक्रूरकालाग्निरुद्रः
कृष्णः कल्याणकारी भवतु कविकुलोत्कीर्त्तितानेककीर्त्तिः॥४६॥
संख्येऽसंख्येयदुःक्षेपणकुणपभुजां वक्षसि क्षिप्तबाणः
पक्षे सख्येऽतिदक्षेऽसुरवरतनुजे ख्यातसौख्योऽम्बुजाक्षः।
अक्षेऽधिक्षेपलक्ष्ये कुरुकुलनृपतेर्धर्म्मराजे कृपालू
रक्षेदक्षेमविक्षेपक उदधितटक्षेत्रराट् क्ष्मापतिर्नः॥ ४७ ॥
कारागारानुकारानुमितभवदवच्छेदनोद्यत्कुठारः
कालव्यालास्यमीलज्जगदवदगदः श्रीलनीलाद्रिसिंहः।

भाराकारावकारानवरतरतनुर्भानुभूदण्डखण्डी
सर्व्वगीर्व्वाणगर्व्वाचलपविरवतु प्राक्तनः पूरुषो नः ॥ ४८ ॥
धीराधीरादिसल्लक्षणचणरमणीवर्गसङ्गीतरागः
स्वाराम्भोराशितीरावनिधरशिखरप्रस्तरागारसारः ।
स्वारान्नीराजिताङ्घ्रिर्बृहदतुलभुजः कुञ्जरापत्तिभेत्ता
भाराहारावतारो वितरतु नितरां श्रीधरः श्रीभरं नः ॥ ४९ ॥
ह्लादिन्याह्लादसीमार्व्बुदमदनरुचिः सन्धिनीसन्धितात्मा
संविल्संवातधामा निगमगणशिरस्तुत्यसत्यप्रभावः ।
शेषाशेषाङ्गसद्मा सुरतरुतलभाक्कल्पितप्रेमरूपः
श्रीकृष्णः प्रेमभक्तिं वितरतु हृदि नः सच्चिदानन्दरूपः ॥ ५० ॥
राधासाधारणश्रीकमनसुमनसं केकिपिच्छावतंसं
चन्द्रावल्यादिरागाच्छिदुरसुरनदीसंग्रहागाधसम्भुम् ।
वंशीसंशीलितास्यं कनकमणिमयाकल्पमाकल्पयन्तं
विद्युद्विद्योतिवस्त्रं नवजलदरुचिं श्रीजगन्नाथमीडे ॥ ५१ ॥
यस्य श्रीविग्रहोद्यद्युतिरिति परमब्रह्म वेदान्तवेद्यं
कोटीब्रह्माण्डभारी परमशिवभवः श्रीमहाविष्णुरंशः ।
यस्य भ्रूक्षेपमात्रात्सृजति हरिहरब्रह्मशक्रादिदेवान्
मायापायादपायादयमुदितदयः पुण्डरीकेश्वरोऽस्मान् ॥ ५२ ॥
कृष्णाकृष्णाम्बुधिष्णुराम्बुजचरणरणाक्षीणगीर्व्वाणशत्रो
कृष्णाकृष्णादितृष्णाहरणरणरणश्रीतिरस्कारकारिन् ।
उष्णानुष्णांशुविस्मापननयनयुगाकार तारुण्यभारि-
न्नस्मान् भीष्मादिकोष्मस्पृह विहितमहापातकान् पाहि पातात् ॥ ५३ ॥
श्रीराधाकान्त कान्ताननननलिनहरे रामकृष्णावतारिन्
गोविन्दानन्दकन्दाङ्कितगुणविततं श्रीपते नीपमालिन् ।

कंसारेऽसारसंसारहर हरनुतापारकारुण्यसिन्धो
दुःखाम्भोरुद्गतिं मे तनु दनुजरिपोऽनुग्रहप्रग्रहेण ॥ ५४ ॥
पार्थानर्थप्रमाथप्रथितपृथुयशो मन्मथप्रार्थ्यकान्ते
श्रीमन्नित्यस्थलस्थागमपथपथिकप्रार्थिताङ्घ्रीमरद्रो ।
शक्रप्रत्यर्थिपाथःपतिमथनमहामन्थ पृथ्वीधरान्तः
स्थानं नाथामि तीर्थाधिपतटवटयोः श्रीजगन्नाथ दुःस्थः ॥ ५५ ॥

दासीपादरजांसि निर्जरशिरोधार्य्याणि सूर्य्यात्मज-
स्फूर्ज्जद्दुर्ज्जयदूतदर्पदमनी यत्र स्थितिः पापिनाम् ।
तत्र स्वादसमोर्द्ध्ववैभववति चेत्रोत्तमे जातु मे
नैव श्रीपुरुषोत्तमे शिवतमे स्यात्तु विरागोदयः ॥ ५६ ॥

इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-
श्रीचन्द्रशेखरकृतौ गणितेऽत्रिसिद्धे ।
सिद्धान्तदर्पण उपाहितबालबोधे
कृष्णस्तुतिस्त्र्यधिकविंश इतः प्रकाशः ॥ ५७ ॥

इति श्रीचन्द्रशेखरसिंहकृतौ सिद्धान्तदर्पणे कालाधिकारे
श्रीपुरुषोत्तमस्तववर्णनो नाम त्र्यधिकविंशतितमः प्रकाशः ।

---

## चतुर्विंशः प्रकाशः ।

### उपसंहारवर्णनम् ।

उपक्रमः स्वेष्टतमस्य विष्णोः स्तवादिनादौ रचितश्रुतस्य ।
तस्मादनल्पोपनतस्य पूर्त्तिमथोपसंहारममुष्य कुर्व्वे ॥ १ ॥
तस्यादितः कौतुकपञ्जिकाख्यं
वक्ष्यामि किञ्चिद्गणितं मया यत् ।

कैशोरभाजा रचि पञ्जिकालिं
दृष्ट्वैव पित्रा लिखितां प्रयत्नात् ॥ २ ॥
पञ्चाङ्गपञ्जीं प्रविलोक्य चैका-
मन्यां ततः कल्पयितुं क्षमः स्यात् ।
जनो धनुर्ज्यापदकाद्यविज्ञो
यथा तथायं क्रियते प्रकारः ॥ ३ ॥
कुवासरा नागशराग्नि३५८तुल्या
नागेन्दु१८नाड्यो रसभू१६विनाड्यः ।
कृताङ्गरामै३६४स्तिथिभिः समाप्ताः
स्युर्मन्दकेन्द्रौजपदान्तगेऽर्के ॥ ४ ॥
पलैस्त्रिभि३र्विश्व१३मितैश्च दण्डै-
र्युक्तानि पूर्वोक्तमहीदिनानि३५८।१३।३
ऋक्षैश्चतुःपञ्चगुणैः३५४ समाप्तिं
यान्त्यत्र नेष्टं रविमन्दकेन्द्रम् ॥ ५ ॥
कुवासरास्ते३५८ सदलेन्द्र१४।३०नाडी-
युक्ताः खनागज्वलनैः सहार्द्धैः३८०॥० ।
योगैः समाप्तिं खलु यान्ति मन्द-
केन्द्रौजपादान्तगते खरांशौ ॥ ६ ॥
तिथ्यर्द्धके यत्र यदिष्टमितत्संवत्सरान्ते करणं प्रमेयम् ।
नक्षत्रभोगाङ्घ्रिविवेचनेन नवर्क्षपादात्मकराशयः स्युः ॥ ७ ॥
पूर्णेष्वतो द्वादशसु क्षपेश-
मासेषु यद्यत्तिथिभाद्यमिष्टम् ।
तत्पूर्ववर्षे हि तिथिः कृतो४ना
ग्राह्या गुणो३नं भमथापि योगः ॥ ८ ॥

सार्द्धद्वयो२॥नः परिगृह्यतां तद्ग्राह्यर्क्षतिथ्यन्तत एव देयाः ।
पुरोदितास्ता निजनाडिकाद्या योगस्य मध्यादथ तत्तदाद्याः ॥९॥*
तिथ्यादयः षष्टिघटीभ्य ऊना भवन्ति चेदिष्टतमास्तदैकः ।
ग्राह्ये दिने वार इहैव देयो द्वौ षष्टिदण्डाधिकतापि चेत्तौ ॥१०॥
तद्ग्राह्यतिथ्यां तिथयश्चतस्रो योज्यास्त्रयस्तत्र किल तारकायाम् ।
योगे च सार्द्धद्वयमेवमिष्टतिथ्यादयो ग्राह्यत उद्भवन्ति ॥ ११ ॥
मासेऽत्र पक्षेऽत्र तिथिर्मदिष्टा कीदृश्यमुष्यां कथमृक्षयोगौ ।
इति स्थिते प्रश्नविधौ तिथिः सा पञ्चाङ्गमुख्या प्रतिभाति यस्मात्॥१२॥
तदत्र पक्षे भवतीष्टतिथ्या पूर्त्तिर्यदृक्षाद्यमिहान्त्यमेति ।
तदिष्टमस्मात् क्वचिदेकयोगो ग्राह्यो क्वचिन्नैकवियोग इष्टः ॥१३॥

अष्टाग्नयो३८ नागरसा६८ गजाश्वा७८
नागर्त्तवो६८ नागगुणा३८ विनाड्यः ।
देयास्तिथाविष्टतमे क्रियादि-
मासेषु पञ्चस्वमुना क्रमेण ॥ १४ ॥
हेयास्तुलादिष्वथ योग इष्टे
प्रोक्तेषु मासेषु धनर्णवाम्यात् ।
सूक्ष्मा ग्रहाष्टादशभागकेऽर्के-
ऽन्यत्रानुपातान्न तु भे क्रियेयम् ॥ १५ ॥
अथोद्धृतो भावितिथिस्तयर्द्धि-
कालः क्रमान्मासु धनुर्मुखेषु ।
तिथी१५न्द्र१४विश्वा१३र्यम१२रुद्र११काष्ठा१०-
गो९दिङ्१०महेशा११र्यम१२विश्व१३शक्रैः१४ ॥१६॥

---

* तिथिनाड्यः १८।१६ भनाड्यः १३।३ योगनाड्यः १४।३० ।

तत्तत्फलं स्वेष्टतिथाद्यणाख्यं कार्य्यं चयद्वोरथ भचयद्वोः ।
खसूर्य्य१२०भागोज्झितयुग्भमिष्टं स्फुटं भवेतत्खरकर्म्म वच्ये ॥१७॥
समोनिते ग्राह्यदिने दिनार्द्धं यत्स्यात्तदेवेष्टदिनेऽब्दतः स्यात् ।
तदन्तरं यद्दिनसप्तकोत्थं तद्याम्यसौम्यायनयोः क्रमेण ॥ १८ ॥

तिथ्यादिषु क्षेप्यमृणं विधेय-
मित्थं स्फुटं स्थूलमतप्रसिद्धम् ।
तिथ्यादिकं सूक्ष्ममितोऽपि कल्प्यं
पूर्व्वोक्तरीत्या मृदुतुङ्गबोधात् ॥ १९ ॥

स्याद्ग्राह्यतिथ्यादि यदीह सूक्ष्मं
स्थूलीकृतिस्तस्य विधातुमिष्टा ।
व्यस्ते तु तुङ्गान्तरपाक्षिकाख्ये
कार्य्ये फले तत्र पुनः प्रयासात् ॥ २० ॥

नागर्त्तवो६८ बाणदिवाकराश्च१२५
गोऽर्थेन्दवः१५९ षट्कनृपाः१६६ शरेन्द्राः१४५ ।
भुजङ्गनन्दाश्च९८ कलम्बरामाः३५
क्रमोत्क्रमादाद्यतिथेर्विनाड्यः ॥ २१ ॥

कार्य्या धनर्णान्यथ बाहुलिप्ताः
पूर्व्वोक्ततुङ्गान्तरकेन्द्रजाताः ।
पञ्चार्द्धजास्तत्त्वयमै२२५र्विभक्ता
लब्धाः स्वखण्डास्तदनु क्रमोत्थाः ॥ २२ ॥

बृहस्पतेर्मान्द्यफलस्य लिप्ता
यास्ताः शरघ्नाद्विहृता विनाड्यः ।
ज्ञेयाः पराः पञ्चदले पुनस्ता
हृताः क्रमाद्दादितिथेस्त्रिचन्द्रैः१३ ॥ २३ ॥

तत्त्वैः२५ कलम्बाग्निभि३५ रथवेदै४५-

रिषार्थै५२र्नगार्थैः५७ खरसै६०र्विलोमम्।

तथाष्टमीतः६०।५७।५२।४५।३५।२५।१३।० खरसै६०र्विभक्ता

वामं स्वतुङ्गान्तरवद्युतोना: ॥ २४ ॥

ग्राह्या इति स्युस्तिथयो भमेवं

तिथ्यन्तपूर्णं तदृणस्वनाड्यः।

विश्वांश१३शहीनास्तिथिभान्तयोर्यत्

कालान्तरं यातमनागतं स्यात् ॥ २५ ॥

तद्घ्नं तिथिद्वन्द्वधनर्णकाला-

न्तरेण षष्ट्याप्तमितैर्घटीभ्या।

न्यूनाधिकं कार्य्यमथर्क्षकेषु

ग्राह्येषु शोध्याः क्रमतो विनाड्यः ॥ २६ ॥

षड्बाहवः२६ षण्निगमा४६स्त्रिबाणा५३

रसाब्धयो४६ऽङ्गाक्षिमिता२६ मृगादेः।

मासेषु कर्क्यादिषु योजनीया

यथास्थिताः कार्म्मुकयुग्मयोस्तु ॥ २७ ॥

योगेऽत्र तिथ्युक्तफलान्यगांश७श-

हीनानि कुर्य्याद्भ इवानुपातम्।

ग्राह्येभ्य इष्टानि पुरोक्तवत् स्युः

स्थूलानि सूक्ष्मीकरणान्तु तेषाम् ॥ २८ ॥

इहोक्ततुङ्गान्तरपाक्षिकाभ्यां स्यादङ्ककानां धनहानिवास्यात्।

भानान्तु कर्क्यादिमृगादिमासधनर्णता स्यादपि वैपरीत्यात् ॥२९॥

गाद्येष्टमध्ये त्वधिमासपात-

श्चेद्ग्राह्यमेवोत्तरमासि सर्व्वम् ।

रूपाद्रिरामां ३७१ स्तिथयोऽर्कवर्षे

यद्यान्ति पूर्त्तिं सह षोडशांशाः ॥ ३० ॥

शराङ्गरामाः ३६५ कुदिनानि दण्डाः

पञ्चेन्दवः १५ पक्षगुणा ३२ विनाड्यः ।

निर्यान्ति भानोर्भगणे ततो यद्-

वारे यदृक्षं प्रविशेत्स तत्र ॥ ३१ ॥

पुनस्तदृक्षाभिगमे च वार एकः प्रदेयो घटिकाः पुरोक्ताः १५।३२ ।

ताः षष्टिदण्डाभ्यधिका यदि स्युर्वारावुभौ संक्रमणे तदिष्टे ॥ ३२ ॥

संक्रान्तितो यत्र दिने स्फुटार्कों

यथा तथाब्दान्तरतद्दिने सः ।

लिप्ताभिरर्थेन्दुभि १५ रष्टचन्द्र १८-

विलिप्तिकाभी रहितः स्फुटः स्यात् ॥ ३३ ॥

यद्राशिचारस्तिथि १५ दण्डतोऽर्व्वाग्द्विराम ३२ सङ्ख्यैः पलकैर्युतेभ्यः ।

तस्मास्यभीष्टे दिन एकहीने प्राग्वर्षजातस्पष्ट इनः पुरेव ॥ ३४ ॥

किन्त्वत्र याः प्रोज्झ्यतया निरुक्ता

लिप्तादय १५।१८ स्ताः स्फुटसूर्य्यगत्या ।

हता विभक्ताः खरसैः ६० स्फुटाः स्यु-

स्तदूनितः सूक्ष्म इनोऽब्दतः स्यात् ॥ ३५ ॥

ग्राह्या हरर्कोज्झित एष्यघस्रसूर्य्यः स्फुटा भुक्तिरतोऽवशेषः ।

अत्येति दर्शं रविसंक्रमश्चेत्तदाधिमासः सुधियावगम्यः ॥ ३६ ॥

भभुक्तनाड्योऽष्टशती८०० विनिघ्नाः साद्यन्तनक्षत्रघटीविभक्ताः ।

गतर्क्षसंख्याष्टशतीगुणाढ्या भवन्ति विस्पष्टसुधांशुलिप्ताः ॥ ३७ ॥

सहस्रनिघ्नाभ्रगजाष्टपक्षा:२८८००० साद्यन्तनक्षत्रपलैर्विभक्ताः ।
फलं विधोर्भुक्तिरनेकवर्षयातैर्घ्यतिथ्यादि विदन्ति विज्ञाः ॥ ३८ ॥
अथेन्दुसूर्य्यग्रहसम्भवाय चान्द्रार्कमानावगतेरहानि ।
आनीय वारैः परिशोधितानि स्वाभीष्टपर्व्वानुगतानि तेभ्यः ॥३९॥

पातं स्वगत्या३।१०।४८ परिकल्प्य पाता-
त्तद्वार्द्धतो वाग्निकु१३भागमध्ये ।
पश्चान्तजेऽर्के स्थित एव चन्द्र-
ग्रहो भवेत्तत्क्रम उक्तपूर्व्वः ॥ ४० ॥

दर्शान्तकाले क्रमतस्तु पूर्व्वपश्चान्नतघ्नंशविहीनयुक्ते ।
तात्कालिकस्वोदिगिषोस्त्रिभोनतनूनतज्याभ्ररसां६०शकस्य ॥ ४१ ॥
दिग्भेदसाम्योत्थवियोगयोगसिद्धस्फुटेषौ रद३२लिप्तिकोने ।
स्यात्सम्भवस्तिग्मरुचिग्रहस्य ग्रासादि सर्व्वं गदितं पुरस्तात् ॥ ४२ ॥
पर्व्वान्तमर्कक्रमणाद्दिनाद्यं यावत्प्रमाणं भवतीष्टवर्षे ।
ग्राह्याब्दसंक्रान्तित एव तावत्कालोत्थभागैः स्फुटता रवीन्द्वोः ॥४३॥

शरेन्दुभि१५र्बाणनृपैः१६५ खनाग-
चन्द्रैः१८० शराङ्केन्दुभि१९५रभ्रदेवैः३३० ।
शराब्धिरामैः३४५ खरसाग्नियाशै३६०-
रेतावतीभिस्तिथिभिः कदाचित् ॥ ४४ ॥

ग्रहात्पुनः प्रग्रहणान्तरं स्यात्ततस्ततस्ताभिरिति क्रमेण ।
पातार्कशीतांशुधिमासविद्भिर्ज्ञेया ग्रहाद्या दशवत्सरान्तम् ॥ ४५ ॥
ताराग्रहाणां समतैकवर्षे न स्याद्यतस्तद्बहुपञ्जिकानाम् ।
कार्य्यौ बुधैः सङ्ग्रह एवमन्यकार्य्याणि सिद्धान्त्यपि साधु ताभ्यः॥४६॥
सौरेण मानेन रदा३२ब्दतः प्राग्यथा कुजः सोऽपि तथेष्टवर्षे ।
चक्रे खनागेन्दु१८०कलाभिराद्य एकादिराश्यन्तरितस्तु सूर्य्यात्॥४७॥

युत: कलाभिर्दशताडिताभि:
कुबाहुभि२१०र्भै२७० रसवीतिहोत्रै:३६० ।
गजाब्धिभि४८०र्वह्निरसै:६३० कुनागै८१०-
स्ताभि: पुन: कार्म्मुकपञ्चकस्थे ॥ ४८ ॥
तस्मिन् क्रमात्पञ्चदशा१५ष्ट८पञ्च५-
मातङ्ग८तिथ्यं१५शसमन्विताभि: ।
युग्मादिपञ्चकगते तदंश१५।८।५।८।१५-
हीनाभिरेवं स्फुटतामुपैति ॥ ४९ ॥

विश्वा१३ब्दत: प्राक् शशिजो यथाभूत्तथेष्टवर्षेऽत्र कियान् विशेष: ।
गत्यन्तरेण स्फुटसौम्यमध्यभान्वोर्वसु८घ्नाग्नि३हृतेन चैष: ॥ ५० ॥
युतोनित: सूर्य्यगते:५९।८ स्वभुक्तिर्न्यूनाधिकत्वे स तु वक्रगश्चेत् ।
तदात्मभास्वद्गतियोगनाग८घाताग्नि३भागेन युत: स्फुट: स्यात्॥५१॥

बृहस्पतिर्द्वादशवर्षत: प्राग्-
यथा तथा स्वार्ककलान्तरस्य ।
स्वार्कांश१२०युग्भि: खकुट्टक२१०कलाभि-
स्ताभि: पुन: कर्कटपञ्चकस्थे ॥ ५२ ॥
तस्मिन् सुधान्धो३३घन१७रुद्र११मेघ१७-
देवां३३शहीनाभिरिहैव नक्रात् ।
भपञ्चकस्थे तु तदंश३३।१७।११।१७।३३युग्भि:
समन्वित: सन् स्फुटतां प्रयाति ॥ ५३ ॥

वर्षाष्टकात्प्राग्भृगुजो यथैवमिष्टाब्दके सौरदिने च तत्र ।
स्फुटस्वभुक्त्यर्य्यममध्यभुक्त्यन्तरेण बाणघ्नभुजो२हृतेन ॥ ५४ ॥
ऊनो युतो भानुगते: स्वभुक्तौ न्यूनाधिकायां क्रमतोऽनृजुश्चेत् ।
युत्या शर५घ्नाक्षि२हृतस्वभास्वद्गत्योस्तदोन: स्फुटतां स गच्छेत् ॥५५॥

शनिः खरामा३०ऽव्दपुरो यथासीत्
किन्त्वात्मसूर्य्यान्तरलिप्तिकानाम् ।
खेनां१२०शयुग्भिः शरवाजिराम३७५-
लिप्ताभिराभिः पुनरत्र मेषात् ॥ ५६ ॥
पञ्चर्चसंस्थे नख२०दिक्१०स्वरा७शा१०-
नखां२०शसंयोगवतीभिरस्मिन् ।
तुलादिपञ्चर्चगते तदंश२०।१०।७।१०।२०-
हीनाभिराढ्यः स्फुटभावमेति ॥ ५७ ॥

अत्रारजीवार्कभुवां यदुक्तं सूर्य्यात् खलिप्तान्तरमेतदेव ।
न राशिषट्कादधिकं कदाचित्ततः परं चन्द्रदले धनं स्यात् ॥ ५८ ॥
अहर्गणः स्वाग्निकृतेन्दु१४३भागयुक्तो नवेन्द्वा१९८प्त इतः फलांशैः ।
ऊनो युतो ग्राह्यदिनस्य राहुरेष्ये गतेऽभीष्टदिने स्फुटः स्यात् ॥ ५९ ॥
दिनोच्चयः स्वाभ्रकृताब्धि४४०भागयुक्तो नवाष्टप्तश्च फलैर्लवाद्यैः ।
युतोनितो ग्राह्यदिनेन्दुमन्द एष्ये गतेऽभीष्टदिने स्फुटः स्यात् ॥६०॥

किंवा नवाश्वै७९र्दिननाथवर्षै-
र्भौमश्चतुःषष्टि६४कलाधिकः स्यात् ।
बुधोऽङ्गवेदै४६र्विधुदिक्१०१कलोनो
गुरुस्त्रिनागैः८३ कृतसप्त७४हीनः ॥ ६१ ॥
शुक्रस्त्रिसिद्धै२४३स्त्रिचतु४३ष्कलाढ्यः
शनिर्नवार्थै५९र्नगशायकाढ्यः५७ ।
राहुस्त्रिनन्दै९३र्नख२०लिप्तिकोनः
शीघ्रौ ज्ञशुक्रावितरेऽत्र मध्याः ॥ ६२ ॥

तिथ्यादिषूक्ताः प्रतिसौरमासं या या हृतिः स्वर्णविनाड़िकास्ताः ।
ग्राह्येऽष्टघस्रार्कयुगान्तराद्वैर्युक्तेष्टघस्रार्थ्यमासतः स्युः ॥ ६३ ॥

ताराग्रहेष्वंशभिदिन्दुभान्वोः कलाप्रभेदस्तिथियोगभेषु ।
पलप्रभेदोऽत्र बुधैर्न गण्यः कृतिर्मदीया यदसायपूर्व्वा ॥ ६४ ॥
स्नानादियोगांश्चिरकालतोऽस्या भविष्यतो ज्ञातुमलं नरः स्यात् ।
मृषाप्यतः कौतुकपञ्जिकेयं महोपकाराय सतां सदास्ताम् ॥ ६५ ॥

इति कौतुकपञ्जिका समाप्ता ।

अथानुक्रमः ।

सलक्षणोदाहरणं वितत्य सिद्धान्तमध्येऽत्र कुतूहलाय ।
उद्देशतो भूय उदीर्य्यतेऽसौ यतोऽतिवेगाद्विषयग्रहः स्यात् ॥ ६६ ॥
प्रोक्तं प्रकाशे प्रथमे प्रमाणं त्रुट्यादिकालस्य लयान्तिमस्य ।
सिद्धान्तसल्लक्षणसृष्टिकालसहाङ्कचक्राणि च सप्रशंसम् ॥ ६७ ॥
संख्याद्वितीये भगणोत्करस्य कल्पाब्दमासद्युमितिर्निरुक्ता ।
नभश्चराणां दिनभुक्तिलिप्तास्तत्साधनं पर्य्ययचक्रक्लृप्तिः ॥ ६८ ॥
उक्तस्तृतीये कुदिनौघ इष्टौ दिनाब्दमासाधिपमध्यखेटाः ।
जैवास्तथाब्दा द्विविधा ग्रहादिध्रुवाद्युपत्यातमृदूच्चहाराः ॥ ६९ ॥
तुर्य्ये महीवेष्टनदेशनाड़ीवारप्रवृत्तीष्टधनर्णलिप्ताः ।
भुजान्तराख्या उदयान्तराख्याश्चरोद्भवाः सत्पदकं ध्रुवाद्यैः ॥ ७० ॥
इत्थं चतुर्भिर्गदितः प्रकाशैर्मध्याधिकारः सुरवर्त्मगानाम् ।
अथ प्रकाशद्वितयेन तेषामुद्दिश्यते विस्फुटताधिकारः ॥ ७१ ॥

इति मध्यमाधिकारः ।

पश्चात्पुरः खेटगतिः प्रमाणं तदुच्चपातोत्थपृथक्फलत्वम् ।
ज्या पञ्चमे दोःफलभुक्तिखण्डाः परिध्युपात्तास्तिथिभादिसर्व्वः ॥ ७२ ॥
षष्ठेऽर्कचन्द्रर्क्षजसूक्ष्मपञ्चीतिथ्यादिसन्धिः प्रतिमण्डलाद्याः ।
चलांशकाः क्रान्तिमहीद्युजीवाश्चराणि लग्ना विविधाश्च देशैः ॥ ७३ ॥

इति स्फुटाधिकारः ।

दिग्भूमिशुद्धिर्भुजकोटिकर्णलम्बाचकाग्राः सममण्डलाद्याः।
दिग्देशकालस्फुटसूर्य्यबोधो ना सप्तमे कोणभवः करण्याः॥ ७४॥
अथाष्टमे सूर्य्यविधुप्रमाभामानश्रुतीषु स्थितिमर्द्दकालैः।
चन्द्रग्रहोक्तिर्वलने सयुक्ती चान्द्रं दिनं ग्रासजवर्णभेदाः॥ ७५॥
युक्तिर्नतेर्विं त्रिभलग्नशङ्कोर्द्दिधोदितं लम्बनमिन्दुभान्वोः।
नतिस्तमोमानभिदा नरोत्या ग्रहः खरांशोर्नवमे किलेति॥ ७६॥
कालोन्नतेर्मानभिदाथ वृत्तत्रयं सरण्या सवशात् समस्तः।
लेखंस्थले छेदकनामधेयो ग्रहस्य सिद्धो दशमप्रकाशे॥ ७७॥
एकादशे खेचरतुल्यतादौ दृक्कर्म्मयुग्मस्फुटदिक्कलम्बैः।
युषद्युतिर्विम्बमितेर्भिदोक्ता युद्धप्रभेदा नलकादिसिद्धिः॥ ७८॥
भानां युतिर्द्वादशके खगेन्द्रैर्भुवाः शराश्चाक्षनयो भसंख्याः।
तद्विम्बमानानि च योगताराः सप्तर्षिगस्त्यप्रमुखाः प्रदिष्टाः॥ ७९॥
त्रयोदशे प्राक्परदिग्गृहर्क्षसमुद्गमास्तङ्गमने निरुक्ते।
क्षेत्रांशकालांशकचक्रभागैर्भास्वत्रिशेशास्फुजितां प्रकाशाः॥ ८०॥
चतुर्द्दशे सूक्ष्मरवीन्दुमध्यकालांशतश्चन्द्रसमुद्गमास्तौ।
चन्द्रच्चयदर्शैः परिलेख इन्दोः शृङ्गोन्नतिः सा बुधशुक्रयोश्च॥ ८१॥
पातो महान् पञ्चदशे निरुक्तो द्विरूप इत्थं नवभिः प्रकाशैः।
त्रिप्रश्ननामाधिकृतिः समाप्ता पूर्व्वं नभःसद्गणिताख्यमर्द्धम्॥ ८२॥

इति त्रिप्रश्नाधिकारः।

इति पूर्व्वार्द्धोद्देशः।

अथोदिताः षोड़शकेऽनुयोगाः स्थिरा चला वा चितिरित्यनेकैः।
मतैः स्वसन्देहमुदस्तुमन्यकार्य्याण्यवैतुं सह वासनाभिः॥ ८३॥
प्रत्युक्तयः सप्तदशे निरुक्ता बौद्धादिनानामतखण्डनोत्थाः।
भ्रान्तिर्विधोः सग्रहभास्तश्च खान्तर्भुवः स्थानमवादियुक्त्या॥ ८४॥

अष्टादशे दृष्टिरथ स्वरूपाख्यर्क्षादिकानां गिरितुङ्गतोक्तिः ।
संस्थानमानानि भुवः सहाब्धेः सयुक्तिकक्षेत्रफलव्रजोक्तिः ॥ ८५ ॥
एकोनविंशे ग्रहभाभ्रकक्षा युक्तिः प्रमाणं श्रुतिमण्डलानाम् ।
वर्षेशमासेशदिनेशहोराधिपक्रमो दृष्टिकरप्रसाराः ॥ ८६ ॥
विंशे द्विधा गोलकयन्त्रक्लृप्तिर्गोलार्द्धचक्रप्रभृतिप्रभेदैः ।
कालस्य राश्यादिमितेश्च सिद्धिः स्वयंवहत्वौपयिकप्रकारः ॥ ८७ ॥
गोलेऽनुभूतिर्गदितैकविंशे देवादिमानस्य तनोः स्फुटादेः ।
विकल्पचक्राख्यृतवोऽब्धिसिद्धाः स्ववासनाभिर्घनमूलकर्म्म ॥ ८८ ॥

इति गोलाधिकारः ।

षड्भिः प्रकाशैरिति संगृहीतो गोलाधिकारस्त्रिभिरुच्यतेऽथ ।
कालः सहार्थाः किल वत्सराद्या द्वाविंशके मानभिदार्कचाराः ॥८९॥
प्रोक्ता त्रयोविंशतमे स्तवालिः कालात्मनः कालनगेन्द्रभर्त्तुः ।
सर्वेश्मनः सावरणस्य पारावारादिसाम्येन च दोषहत्यै ॥ ९० ॥
अन्त्ये चतुर्व्विंश इह स्फुटोऽभूदनुक्रमः कौतुकपञ्जिकादिः ।
कालाधिकारोऽयमगात् परार्द्धं गोलादिशब्दं गणितं यदाहुः ॥९१॥

इति कालाधिकारः ।　इत्युत्तरार्द्धोद्देशः ।

केचित्पठिष्यन्त्युपसंहृतिं तदुद्देशतो भूरिपदार्थजातम् ।
मयोदितं राजकुमारकाद्यैर्वेदाङ्गपाठोत्थफलाय सौख्यात् ॥ ९२ ॥
दिग्देशकालावगतिः प्रकाशात् स्यात्सप्तमादेव तथापि धीराः ।
न लोकसिद्धस्थलबोधहीना ग्रहादि संदर्शयितुं यदीशाः ॥ ९३ ॥

प्रधाननगरेष्वतो धरणिमध्यरेखा पुरः
परान्तरविनाडिकाः पलकलाश्च वच्मि क्रमात् ।
यतो विविधदेशजां वदितुमेकदेशस्थितः
प्रभुर्भवति पञ्जिकां चतुरिमाश्रयः साधकः ॥ ९४ ॥

भूमध्यरेखानुभवप्रसिद्धा अक्षांशलिप्ताः किल जूनदुर्गे(१) ।
तदुत्तरे मोरपुरे(२)ऽथ भन्नापुरे(३) ततो रामगडे(४) ततश्च ॥ ९५ ॥

सौम्ये जलावादपुरे(५) क्रमेण
कृताङ्कसूर्य्याः१२९४ कुनगाग्निचन्द्राः१३७१ ।
नागेत्तगेन्द्रा१४२८ द्विकृताङ्कचन्द्राः१६४३
शिलोच्चयाङ्काम्बरबाहवश्च२०६७ ॥ ९६ ॥

आर्केन्द्रमितत्समसूत्रनिष्ठभूमौ न देशान्तरसंस्कृतिः स्यात् ।
प्राग्भूविभागे खलु गुर्ज्जराष्ट्रे(६) देशान्तरं बाण५मिता विनाड्यः॥९७॥

तत्राक्षलिप्ताः शरदृक्त्रिचन्द्रा१३२५
ऊनापुरे(७)ऽश्वाः७ शरबाणसूर्य्याः१२५५ ।
श्रीनर्म्मदातोयधिसङ्गमे(८)ऽक्षि-
पक्षाः२२ खशून्यज्वलनौषधीशाः१३०० ॥ ९८ ॥

बोम्बायिपुर्य्यां(९) त्रिभुजा२३ नगाग्नी-
शा११३७श्चोदयाख्यानपुरे(१०) खरामाः३० ।
खाद्र्यब्धिचन्द्रा१४७० अथ षट्करामा३६
लाहोरके(११) पूर्णखनन्दचन्द्राः१९०० ॥ ९९ ॥

काश्मीरजश्रीनगरे(१२) त्रिवेदा४३
रामाशुगव्योमविलोचनानि२०५३ ।
जम्ब्वां(१३) त्रिवेदा४३ द्विशराङ्कचन्द्रा१९५२
वस्वब्धयः४८ खाक्षिनृपा१६२० जयाद्यौ ॥ १०० ॥

पुर्य्यु(१४)ज्जयिन्यां(१५) खशराः५० खनन्द-
विश्वे१३९०ऽथ विन्ध्याचलमध्यदेशे(१६) ।
द्व्यर्थाः५२ खबाणाग्निभुवः१३५० कुरूणां
क्षेत्रे(१७) रसार्थाः५६ खनवाद्रिचन्द्राः१७९० ॥ १०१ ॥

श्रीरङ्गके(१८) द्व्यङ्गमिता९२ द्विवेदा-
द्र्यो७४२ऽर्थषट्का६५ नगरामशैला:७३७ ।
कर्णाटके(१९)ऽथो गजसाह्वये(२०)ऽङ्ग-
षट्का६६ नगक्ष्माद्रिभुव:१७१७ प्रदिष्टा: ॥ १०२ ॥
कुमारिकानामनि चान्तरीपे(२१)
गजर्त्तवो६८ नागभुजाब्धि४२८संख्या: ।
भूपालके(२२) नन्दरसा:६९ खखेन्द्रा१४००
व्रजे(२३) खशैला:७० खरसाङ्कचन्द्रा:१६६० ॥ १०३ ॥
आग्रापुरे(२४) वेदनगा:७४ कुराम-
भूपाश्च१६३१ काश्यां(२५) त्रिगजा:८३ खषट्षट्६६०
श्रीवेङ्कटे(२६) खाष्ट८० नभोऽष्टशैला७८०
रामेश्वरे(२७)ऽगाष्ट८७ रसार्थबाणा:५५६ ॥ १०४ ॥
तद्राविडे(२८)ऽद्र्यष्ट८७ खषट्कषट्का६६०
बुन्देलके(२९)ऽगाष्ट८७ खखार्थचन्द्रा:१५०० ।
श्रीनर्म्मदासौम्यतटे जबल्ल-
पुरे(३०) तथा भारतवर्षमध्ये ॥ १०५ ॥
त्र्यङ्का:९३ शराङ्काग्निभुवो१३९५ऽथ चेन्न-
पुर्य्यां(३१) नगाङ्का:९७ कृतनागशैला:७८४ ।
कृष्णाब्धिसङ्गे(३२) द्विदिश:१०२ खबाण-
नन्दा९५० अथो रायपुरे(३३) नवाशा:१०९ ॥ १०६ ॥
गोऽङ्कारुणा१२६९ राजमहेन्द्रपुर्य्यां(३४)
रुद्रेन्दवो१११ द्विद्विदिश:१०२२ प्रयागे(३५) ।
चन्द्रेश्वरा:१११ खाग्निशरेन्दव१५३०स्त्वा-
योध्यापुरे(३६) रत्नपुरे(३७)ऽर्थरुद्रा:११६ ॥ १०७ ॥

शराभ्रभूपा१६०५चकलाः षड्ङ्ग-
विश्वे१२६६ऽथ गोदावरिसिन्धुसङ्गे(३८)।
घनेन्द्वो११७ऽङ्गाभ्रदिशो१००६ऽथ काश्यां(३९)
त्रिक्षेन्द्वो१२४ऽद्रीन्दुशरेन्दु१५१७संख्याः ॥ १०८ ॥
अथोदिता रायगढे(४०)ऽद्रिसूर्य्या१२७
नागाभ्रविश्वे१३०८ऽथ त्रिशाखपुर्य्याम्(४१)।
नगार्कणा१२७ द्व्यङ्गदिशः१०६२ समल-
पुरे(४२) खविश्वे१३० त्रिगजाक्षिचन्द्राः१२८३ ॥ १०९ ॥
श्रीकाकुले(४३) रामगुणौषधीशाः१३३
समुद्रनन्दाम्बरशीतभासः१०९४।
नेपालमध्ये(४४) कृतरामरूपा१३४-
ष्यष्टाष्टभूपा१६८८श्च महेन्द्रशैले(४५) ॥ ११० ॥
गोविश्वके१३९ खेन्द्रभुवो११४० गयायां(४६)
गुणाब्धिचन्द्रा१४३ वसुवारणेन्द्राः१४८८।
वरम्पुरे(४७) त्र्यब्धिभुवो१४३ऽब्धिबाण-
रुद्राश्च११५४ गञ्जाम(४८) इषुश्रुतिक्ष्माः१४५ ॥ १११ ॥
वेदाङ्गरुद्रा११६४ अथ माधवस्य
चैत्रे(४९) रसेन्द्रा१४६ द्विभुजाक्षिचन्द्राः१२२२।
नीलाचले(५०) द्व्यक्षियो१५२ऽष्टनाग-
रुद्रा११८८स्तथैकाम्रवने(५१) विनाद्यः१५२ ॥ ११२ ॥
इन्द्रार्कलिप्ताः१२१४ कटके(५२) तु सार्द्ध-
द्व्याणचन्द्रा१५२॥० वसुद्दग्द्विचन्द्राः१२२८।
महानदीसागरसङ्गमे(५३) भू-
रसेन्द्वो१६१ विश्वभुजेन्द्वश्च१२१३ ॥ ११३ ॥

बालेश्वरे(५४) रूपनृपा१६१ द्विनन्द-
पक्षेन्दव१२९२श्चैव जलेश्वरे(५५) तु ।
शराङ्गरूपाणि१६५ च विश्वविश्वे१३१३
स्युर्मेदिनीपु(५६)र्य्यगषड्धरण्य:१६७ ॥ ११४ ॥

खार्याग्निचन्द्रा१३५ अथ वर्द्धमाने(५७)
द्व्यगेन्दव:१७२ खाङ्कगुणेन्दवश्च१३९० ।
गङ्गाब्धिसङ्गे(५८)ऽर्थघना:१७५ शराग्नि-
विश्वे१३२५ नवद्वीपपुरे(५९)ऽद्र्यगक्ष्मा:१७७ ॥ ११५ ॥

कृताम्बरेन्द्राश्च१४०४ कलीकतायां(६०)
कुम्भद्वना१७७ वेदशराग्निचन्द्रा:१३५४ ।
वङ्गस्थरङ्गाद्यपुरे(६१)ऽङ्कनाग-
चन्द्रा१८६ रसाम्भोधिशरेन्दुसंख्या:१५४६ ॥ ११६ ॥

ढक्कापुरे(६२) नन्दनवेन्दवश्च१९९
शरेक्षणाम्भ:पतिरात्रिनाथा:१४२५ ।
श्रीहट्टके(६३) विश्वभुजा:२१३ शराङ्क-
वेदेन्दवो१४९५ लोहितनामनद्याम्(६४) ॥ ११७ ॥

द्व्यब्धीक्षणा२४२ऽन्ब्धिशराङ्कचन्द्रा१६५४ इतीरिता भारतपूर्व्वभागे।
कथ्यन्त एतत्परभागदेशा भूमध्यरेखान्तिकत: क्रमेण ॥ ११८ ॥

रणे(६५) भुजौ२ खाम्बुधिवेदचन्द्रा:१४४०
कचे(६६)ऽद्रय:७ सर्पगजाग्निचन्द्रा:१३८८ ।
सिन्धौ(६७) किलेन्द्रा:१४ खरसार्थचन्द्रा:१५६०
श्रीद्वारकाकाबुलयो:(६८।६९) शरक्ष्मा:१५ ॥ ११९ ॥

गजामरक्ष्मा:१३३८ स्वरपक्षखाश्च२०६७
स्थानाफगान्यां(७०) नवभूमय:१९ स्यु: ।

शराद्रिनागक्षितयो१८७५ऽथ सिन्धु-
नद्यब्धिसङ्गे(७१)ऽब्धिभुजा२४ घनेन्द्राः१४१७ ॥ १२० ॥
अथाद्रिरामाः३७ पुरि देहजङ्घ्यां(७२)
भुजङ्गमातङ्गनभोभुजाश्च२०८८।
प्राग्भारतस्याप्यथ वर्म्मदेश-
मध्ये(७३)ऽद्रितत्त्वानि२५७ गुणाभ्ररुद्राः११०३ ॥ १२१ ॥
ऐरावतीसागरसङ्गमोऽस्य याम्येऽष्टवेदाङ्क९४८मिताश्चलिप्ते।
पारस्यके(७४) भारतपश्चिमस्थे
नगार्थचन्द्रा१५७ नखनन्दचन्द्राः१९२० ॥ १२२ ॥
आरब्यमध्ये(७५)ऽद्रिगुणेक्षणानि२३७
दिग्वासवा१४१०श्चाथ तुरुष्कभूमौ(७६)।
नगाग्निरामाः३३७ खनवेन्दुपक्षा२१९०
याम्यस्थलङ्कापुरि(७७) खाभ्रचन्द्राः१०० ॥ १२३ ॥
प्राच्या विघव्योऽष्टगजाब्धि४८८लिप्ता वर्षोत्तरे हिन्दुकुशाद्रिमध्ये(७८)।
नृपाः१६ शरार्काश्विमिता२१२५ हिमाद्रेः
परेऽष्टरामाः३८ कृतदिग्दृशो२१०४ऽशे(७९) ॥ १२४ ॥
पूर्व्वे(८०)ऽग्निसिद्धा२४३ नगनागभूपा१६८७
मध्ये(८१) शशीन्द्रा१४१स्त्रिगुणाद्रिचन्द्राः१७३३।
शृङ्गस्य गौर्य्यादिकशङ्करस्या(८२)-
ष्टाब्ध्यग्निगोचन्द्र१९३४८करोच्छ्रयस्य ॥ १२५ ॥
खार्थेन्दवः१५० खाभ्रघना१७०० नगेश-
सौम्ये ह्रदे मानसनामधेये(८३)।
षट्खेन्दवः१०६ खाम्बुधिनागचन्द्राः१८४०
सप्ताङ्गषड्जिष्णु१४६६७करोन्नतेषु ॥ १२६ ॥

कैलासशैलस्य(८४) दिगिन्दवो११०ऽर्थ-
शैलाष्टचन्द्रा१८७५श्च तदुत्तरस्थे ।
देशे पुरस्त्रिब्बतनाम्नि(८५)राम-
गोऽब्जाः१८३ खबाणाङ्कभुवो१९५०ऽथ चीने(८६) ॥१२७॥
त्रिनन्दरामाः३९३ खरसाष्टचन्द्रा१८६०-
स्तद्राजधान्यां(८७) गुणनन्दवेदाः४९३ ।
शून्याभ्रसिद्धा२४०० अथ रूष्यमध्ये(८८)
त्र्यङ्काब्धयः४९३ पूर्णनवाङ्करामाः३९९० ॥ १२८ ॥
इत्याशियानाममहीमहांशस्थानानि पश्चादियुरोपनाम्नः ।
भागस्य मध्ये(८९) परदिग्विघव्यः
सप्ताभ्रबाणाः५०७ खधृतित्रि३१८०लिप्ताः ॥ १२९ ॥
तत्पश्चिमे द्वीपमुदन्वदन्तर्लण्डनामास्ति तदन्तरस्थे ।
पुरोत्तमे लण्डननाम्नि(९०)गाभ्र-
शैलाः७०७ खनन्दाभ्रगुणाः३०९० प्रदिष्टाः ॥ १३० ॥
तद्याम्यगे खण्ड इहाफ्रिकाख्ये(९१)
सप्ताभ्रबाणाश्च५०७ निरक्षमन्तः ।
त्रयः कुभागा उदिता हि जम्बूद्वीपस्य याम्यांशतया प्रसिद्धाः ॥१३१॥
आमेरिकाधो द्विविधोत्तरास्य सौम्यांश(९२)उक्तापरदिग्विघव्यः ।
तन्मध्य एवाद्रिखसप्तचन्द्राः१७०७
खखाभ्ररामा३००० अथ दक्षिणस्याः ॥ १३२ ॥
मध्ये(९३)ऽद्रिनागाक्षिभुवो१२८७ऽस्त्रलिप्ताः
सौम्याः खदन्तेन्दव१३२० आसुरांशे ।
अस्त्रेलियान्त(९४)स्त्रिभुजाङ्कसंख्याः६२३
प्राच्याः खखार्थक्षितयश्च१५०० सौम्याः ॥ १३३ ॥

अथार्कसूक्ष्मग्रहणानुभूत्यै
ससंनिकृष्टेषु पुरेषु भूयः।
लिखामि ताः सप्तगुणौषधीशा१३७
बीडे(९५) खबाणेन्दुशीतभासः१२५० ॥ १३४ ॥
मञ्जूषिकायां(९६) खकृतेन्दवो१४०ऽर्थ-
विश्वेन्दवो११३५ऽथाणुगुले(९७) कृतेन्द्राः१४४।
सप्ताब्धिसूर्य्या१२४७ नवदुर्गके(९८)ऽर्थ-
शक्रा१४५ नगाभ्रेक्षणरूपसंख्याः१२०७ ॥ १३५ ॥
खण्डादिसत्पत्तनके(९९)ऽङ्गशक्रा१४६
नृपाक्षिचन्द्रा१२१६ अथ तालचेरे(१००)।
षड्जिष्णवो१४६ऽष्टेष्वरुणाश्च१२५८ पारि-
द्वीपे(१०१)ऽद्रिशक्रा१४७ विधुनागरुद्राः११८१ ॥ १३६ ॥
पुरे रणाद्ये(१०२)ऽद्रिकृतेन्दवो१४७ऽर्थ-
शून्याक्षिचन्द्रा१२०५ वृहदम्बिकायाम्(१०३)।
शैलाब्धिचन्द्राः१४७ कृतनेत्रसूर्य्या१२२४
ढेङ्कादिनाले(१०४) खशरेन्दवः१५० स्युः ॥ १३७ ॥
वसुत्रिसूर्य्याः१२३८ शरतत्त्ववस्तु१५५
कोणार्के(१०५) एवाग्निनवेश्वराश्च११९३।
सुनिश्चिता याजपुरे(१०६)ऽष्टबाण-
चन्द्रा१५८ महीबाणभुजाधरित्राः१२५१ ॥ १३८ ॥
मयूरभञ्जे(१०७)ऽष्टशरेन्दवो१५८ऽर्क-
रामेन्दवो१३१२ नीलगिरौ(१०८) खभूपाः१६०।
नगाष्टसूर्य्या१२८७ इति सत्सुखार्थ-
मष्टाधिकस्थानशतं१०८ मयोक्तम् ॥ १३९ ॥

अन्वेषितस्थलयुगान्तरमार्गमान-
मानेतुमच्चकलिकाविवरं विनिघ्नम् ।
भूवेष्टनेन महता५०२६ हृतमुच्चचक्र-
लिप्ताचयेन२१६०० फलमात्महतं पृथक्स्थम् ॥ १४० ॥
प्राक्प्रत्यगन्तरहृतक्षितिवृत्त५०२६मभ्र-
खाङ्गाग्नि३६००हृद्विपदमध्यजयाहतं तत् ।
लम्बज्यया त्रिगुण३४३८हृत् स्वहतं द्विवर्ग-
योगात् पदं हि पदयो ऋजुमध्यमार्गः ॥ १४१ ॥
ज्योतिस्तत्त्वविदो वदन्ति परमक्रान्तेश्चिरान्हसा
यत्किञ्चित्तनुतो ऋते परमविक्षेपस्य खेटावलेः ।
याम्योदगध्रुवपश्चिमभ्रमपथस्यात्रानुभूत्यागम-
प्रामाण्येन विना व्यलेखि न मया तत्तत्कलानिर्णयः ॥१४२॥
मूर्द्धोर्द्ध्वाम्बरसूत्रगो दिनमणिः स्याद्यद्दिनार्द्धे तदा
सद्मोर्द्ध्वस्थितरन्ध्रगक्षितिपतत्तद्भानुनिष्ठाज्जलात् ।
उद्गच्छत्किरणस्य रन्ध्रसमतां दृष्ट्वा तदा त्वार्कजा
क्रान्तिः स्वाक्षतयोदितैवमखिलं देशेषु वेद्यं बुधैः ॥ १४३ ॥
दृष्ट्वा दृष्टिविरुद्धमन्यगणितं त्राणाय धर्म्मस्य वा
भ्रान्तिं तथ्यतया भुवः प्रवदतां वाग्भङ्गिभङ्गाय वा ।
विद्वत्संसदि मत्प्रलापजपरीहासप्रकाशाय वा
येनाहं हृदि तिष्ठता मुखरितः कस्मैचिदस्मै नमः ॥ १४४ ॥
आसीत्काशीन्द्रकाशीश्वरमिहिरतनूजन्मराजाधिराज-
स्वाराट्प्रत्यर्थिपृथ्वीधवदहनपृषत्पत्रमात्रोत्थगात्रः ।
प्राप्तश्रीमद्दुराजभ्रमरवरपदः सत्तमात्मार्व्वभौमा-
द्धीमान् वैरागिनामा स्फुटतममहिमाखण्डलः खण्डपृथ्व्याः ॥१४५॥

तस्मात्कृष्णात्महत्त्वादजनि शुभजनिर्गाङ्गभङ्गावगाही
भीमानुस्मारकोषार्ज्जितपरविजय: श्रीलनीलाद्रिसिंह: ।
तत्सूनु: शुभ्रभानुद्युमणिपरिभवोद्दामकीर्त्तिप्रलाप:
प्राप प्राक् श्रीनृसिंह: पदमजितपदध्यानलीनत्रिताप: ॥ १४६ ॥
चत्ताधिश्रीवघेलान्वयपयउदधिप्रोद्यदापूर्णचन्द्रा-
ज्जातोऽतिःसम्धानसिन्धुस्तत उदयमगच्छद्बुध: श्यामबन्धु: ।
स्वान्तोद्यद्दीनबन्धुप्रपदनखमह:संहृतांहस्तमिस्त्र:
श्रीमान् सिंहान्तनामोत्कलनिलयभरद्वाजगोत्राब्जमित्र: ॥ १४७ ॥
तज्ज: श्रीमधुसूदनाभिधमहापात्राद्गुरोर्दीक्षितो
विद्यामुद्यतखङ्गरायसुपदादानन्दमिश्राद्गत: ।
सोऽहं ब्रह्मगिरीशमाधवपदावास: स्वधर्म्माश्रम:
सिद्धान्तग्रथनं चकार यदिदं स्यात्कृष्णपादार्पितम् ॥ १४८ ॥
याताङ्गत्रिनवाब्धि४९३६वत्सरकलौ जन्माभवन्मामकं
वेदोषर्बुध३४वर्षकेण च मया ग्रन्थोऽयमाविष्कृत: ।
सन्त: सन्ततमत्र सन्तु गणिते सन्तोषवन्तो गुणं
गृह्णन्त: परिहृत्य दोषगणनां नास्ते* न यत्सर्व्ववित् ॥ १४९ ॥
सिद्धान्तानुदिता अपीह गदिता ये ये विशेषा मया
ते हेया नवकल्पना इति मतिर्माभूत्प्रभूणां क्वचित् ।
दृक्सिद्धैर् किल लल्लभास्करशतानन्दार्य्यभट्टादिभि:
स्वग्रन्थेषु यदीरिता बहुमता दृग्विशेषा नवा: ॥ १५० ॥
सिद्धान्ताध्ययनं विनापि गगनाभोगो नभोगोडुभि:
सार्द्धं वासनया यदीयहृदयेऽनृत्यत्तदाविष्कृते ।

---

* ना पुरुष: ।

सिद्धान्तप्रमुखे प्रकाशनवकस्याष्टाधिकारद्वयी
युक्तं दर्पणकेऽत्र गोलगणितख्यात्युत्तरार्द्धं गतम् ॥ १५१ ॥

अपिच ।

इति श्रीसिद्धान्तप्रथमपदयुग्दर्पणं इति
प्रसिद्धः संशुद्धो वचननयनैक्याधिगमनात् ।
प्रकाशैर्द्विःसूर्य्यै२४रिषुभि५रधिकारैरुपचितः
समाप्तोऽयं ग्रन्थः स्फुरतु चिरमन्तः क्षितितलम् ॥ १५२ ॥

त्रुट्यादिप्रलयान्तकालकलनात् प्रेतेशितुः शासना-
न्नीलद्रव्यचयाधिकासितरुचः काले सुखादानतः ।
नीलस्याचलनायकस्य शिरसोऽलङ्कारभावात् स्वतः
सम्प्रोक्तः किल कालकाल इति यः कृष्णाय तस्मै नमः ॥१५३॥

आत्मादेशश्रुतिस्मृत्युदितबहुविधाचारवारं प्रजाभिः
काले कालेऽनुतिष्ठन् गगनगगणितं सार्थयत्यात्मजाभिः ।
विश्वं यः पाति मादृक्पतितततिसमुद्धारणोन्नद्धबाहुः
सोऽयं देवः शितिक्ष्माभृति जयतितमामिन्द्रनीलोज्ज्वलश्रीः ॥१५४॥

इत्युत्कलोज्ज्वलनृपालकुलप्रसूत-
श्रीचन्द्रशेखरकृतौ गणितेऽक्षिसिद्धे ।
सिद्धान्तदर्पण उपाहितबालबोधे
सानुक्रमो व्यरचि सिद्ध२४मितः प्रकाशः ॥ १५५ ॥

इति कालाधिकारः पञ्चमः ।

इति श्रीचन्द्रशेखरसिंहकृतौ शुद्धसिद्धान्तदर्पणे कालाधिकारे कौतुकपञ्जिका-
द्युपसंहारवर्णनो नाम चतुर्विंशतितमः प्रकाशः समाप्तः ।

समाप्तश्चायं सिद्धान्तदर्पणः ।

श्रीजगन्नाथार्पितोऽस्तु । श्रीः ।

श्लोकाः स्वकृता इह वेदनाग-
पञ्चाग्निसङ्ख्या२२८४ अथ भूपपञ्चाः२१६ ।
ग्रन्थान्तरोत्थाः खखबाणपञ्चाः२५००*
सञ्चय भव्याय भवन्तु दत्ताः ॥ १५६ ॥

भौमस्यापि पराजयो युधि भवेद्बुद्धिभ्रमः स्यान्मुनेः
कादाचित्कतयाप्यतोऽल्पविदुषोऽस्मादृशां का कथा ।
तस्माद्यद्यदशुद्धमत्र गणितं यद्वा सहार्थं पदं
तत्सर्वं परिशोधयन्तु कृतिनः कृत्वानुकम्पां मयि ॥ १५७ ॥

ब्रह्माण्डाखण्डभाण्डस्थिरतरधरणीमण्डलभ्रान्तिशौण्ड-
प्रोद्दण्डोद्दण्डदन्तावलबलदलनाकुण्ठकण्ठीरवश्रीः ।
सोऽयं नीलाद्रिसिंहान्वयवदनदरीनिर्गतः प्राप्तदुर्गः
स्फीतख्यातिरस्तु प्रथमविगणितस्कन्धसारः प्रबन्धः ॥ १५८ ॥

त्रैलोक्यदसितगोत्रे सूत्रामादिस्तवावलीपात्रे ।
गात्रं मम सुपवित्रे निपततु पुरुषोत्तमक्षेत्रे ॥ १५९ ॥

मुकुन्ददेवस्य चतुर्दशाङ्के
काले वृषाष्टेन्दु१८१४समे च शाके ।
वारे शनेर्मार्गपुरोनवम्या-
मिदं मया पुस्तकमाप्त पूर्णम् ॥ १६० ॥

---

* अनुष्टुब्ग्रन्थप्रायिकसंख्या सहस्रचतुष्टयम्४००० ।

---

सम्पूर्णः ।

---

## (क) एकादिसौराब्दानां सावनाहर्गणाः ।

चतुर्थप्रकाशः ५४तमश्लोकः २७शपृष्ठे ।

| वर्षाणि | दिनानि | वर्षाणि | दिनानि |
|---|---|---|---|
| १ | ३६५ | ५शतम् | १८२६२९ |
| २ | ७३१ | ६ | २१९१५५ |
| ३ | १०९६ | ७ | २५५६८१ |
| ४ | १४६१ | ८ | २९२२०७ |
| ५ | १८२६ | ९ | ३२८७३३ |
| ६ | २१९२ | १सहस्रम् | ३६५२५९ |
| ७ | २५५७ | २ | ७३०५१७ |
| ८ | २९२२ | ३ | १०९५७७६ |
| ९ | ३२८७ | ४ | १४६१०३५ |
| १० | ३६५३ | ५ | १८२६२९४ |
| २० | ७३०५ | ६ | २१९१५५२ |
| ३० | १०९५८ | ७ | २५५६८११ |
| ४० | १४६१० | ८ | २९२२०७० |
| ५० | १८२६३ | ९ | ३२८७३२९ |
| ६० | २१९१६ | १अयुतम् | ३६५२५८८ |
| ७० | २५५६८ | २ | ७३०५१७५ |
| ८० | २९२२१ | ३ | १०९५७७६३ |
| ९० | ३२८७३ | ४ | १४६१०३५० |
| १शतम् | ३६५२६ | ५ | १८२६२९३८ |
| २ | ७३०५२ | ६ | २१९१५५२५ |
| ३ | १०९५७८ | ७ | २५५६८११३ |
| ४ | १४६१०३ | ८ | २९२२०७०१ |

| | | | |
|---|---|---|---|
| ९ अयुतम् | ३२८७३२८८ | ३ कोटिः | १०९५७७६२६९४ |
| १ लक्षम् | ३६५२५८७६ | ४ | १४६१०३५०२५९ |
| २ | ७३०५१७५१ | ५ | १८२६२९३७८२४ |
| ३ | १०९५७७६२७ | ६ | २१९१५५२५३८९ |
| ४ | १४६१०३५०३ | ७ | २५५६८११२९५४ |
| ५ | १८२६२९३७८ | ८ | २९२२०७००५१९ |
| ६ | २१९१५५२५४ | ९ | ३२८७३२८८०८३ |
| ७ | २५५६८११३० | १ अर्व्वुदम् | ३६५२५८७५६४८ |
| ८ | २९२२०७००५ | २ | ७३०५१७५१२९६ |
| ९ | ३२८७३२८८१ | ३ | १०९५७७६२६९४४ |
| १ नियुतम् | ३६५२५८७५६ | ४ | १४६१०३५०२५९३ |
| २ | ७३०५१७५१३ | ५ | १८२६२९३७८२४१ |
| ३ | १०९५७७६२६९ | ६ | २१९१५५२५३८८९ |
| ४ | १४६१०३५०२६ | ७ | २५५६८११२९५३७ |
| ५ | १८२६२९३७८२ | ८ | २९२२०७००५१८५ |
| ६ | २१९१५५२५३९ | ९ | ३२८७३२८८०८३३ |
| ७ | २५५६८११२९५ | १ पद्मम् | ३६५२५८७५६४८१ |
| ८ | २९२२०७००५२ | २ | ७३०५१७५१२९६३ |
| ९ | ३२८७३२८८०८ | ३ | १०९५७७६२६९४४४ |
| १ कोटिः | ३६५२५८७५६५ | ४ | १४६१०३५०२५९२६ |
| २ | ७३०५१७५१३० | | |

करणाब्दमुखगताहर्गणः सृष्ट्यादेः ७१४४०४१११९६२

कल्पादेः १८१५३३५ ग्रहध्रुवाहर्गणः १८१५३३४

एकोनाहर्गणाद्ध्रुवा दिनगतियुताः पञ्चीमुखदिने मध्याः स्युः ।

# (ख।१) रवेर्मध्यपदकानि ।

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| १ | ०।०।५९।८।१० | ६शतम् | ७।२१।२१।४१।४४ |
| २ | ०।१।५८।१६।२० | ७ | १०।२९।५५।१८।४१ |
| ३ | ०।२।५७।२४।३१ | ८ | २।८।२८।५५।३९ |
| ४ | ०।३।५६।३२।४१ | ९ | ५।१७।२।३२।३६ |
| ५ | ०।४।५५।४०।५१ | १सहस्रम् | ८।२५।३६।९।३३ |
| ६ | ०।५।५४।४९।१ | २ | ५।२१।१२।१९।७ |
| ७ | ०।६।५३।५७।११ | ३ | २।१६।४८।२८।४० |
| ८ | ०।७।५३।५।२१ | ४ | ११।१२।२४।३८।१४ |
| ९ | ०।८।५२।१३।३२ | ५ | ८।८।०।४७।४७ |
| १० | ०।९।५१।२१।४२ | ६ | ५।३।३६।५७।२० |
| २० | ०।१९।४२।४३।२३ | ७ | १।२९।१३।६।५४ |
| ३० | ०।२९।३४।५।५ | ८ | १०।२४।४९।१६।२८ |
| ४० | १।९।२५।२६।४७ | ९ | ७।२०।२५।२६।१ |
| ५० | १।१९।१६।४८।२९ | १अयुतम् | ४।१६।१।३५।३४ |
| ६० | १।२९।८।१०।१० | २ | ९।२।३।११।८ |
| ७० | २।८।५९।३१।५२ | ३ | १।१८।४।४६।४२ |
| ८० | २।१८।५०।५३।३४ | ४ | ६।४।६।२२।१६ |
| ९० | २।२८।४२।१५।१६ | ५ | १०।२०।७।५७।५० |
| १शतम् | ३।८।३३।३६।५७ | ६ | ३।६।९।३३।२३ |
| २ | ६।१७।७।१३।५५ | ७ | ७।२२।११।८।५७ |
| ३ | ९।२५।४०।५०।५२ | ८ | ०।८।१२।४४।३१ |
| ४ | १।४।१४।२७।४९ | ९ | ४।२४।१४।२०।५ |
| ५ | ४।१२।४८।४।४७ | १लक्षम् | ९।१०।१५।५५।३९ |

| दिनानि | राश्यादय: |
|---|---|
| २ लक्षम् | ६।२०।३१।५१।१८ |
| ३ | ४।०।४७।४६।५७ |
| ४ | ११।१।३।४२।३६ |
| ५ | १०।२१।१९।३८।१६ |
| ६ | ८।१।३५।३३।५५ |
| ७ | ५।११।५१।२९।३४ |
| ८ | २।२२।७।२५।१३ |
| ९ | ०।२।२३।२०।५२ |
| १ नियुतम् | ९।१२।३९।१६।३१ |
| २ | ६।२५।१८।३३।२ |
| ३ | ४।७।५७।४९।३४ |
| ४ | १।२०।३७।६।५ |
| ५ | ११।३।१६।२२।३६ |
| ६ | ८।१५।५५।३९।७ |
| ७ नियुतम् | ५।२८।३४।५५।३८ |
| ८ | ३।११।१४।१२।१० |
| ९ | ०।२३।५३।२८।४१ |
| १ कोटि: | १०।६।३२।४५।१२ |
| २ | ८।१३।५।३०।२४ |
| ३ | ६।१९।३८।१५।३६ |
| ४ | ४।२६।११।०।४८ |
| ५ | ३।२।४३।४६।० |
| ६ | १।९।१६।३१।१३ |
| ७ | ११।१५।४९।१६।२५ |
| ८ | ९।२२।२२।१।३७ |
| ९ | ७।२८।५४।४६।४९ |
| १ अर्व्बुदम् | ६।५।२७।३२।१ |

| | |
|---|---|
| रवेर्द्वापरान्तध्रुवराश्यादय: | ०।०।०।०।० |
| " करणाब्दध्रुव: | ११।२८।१५।२०।४६ |
| गतिलिप्तादय: | ५९।८।१०।१०।२४।१२ |
| द्वापरान्तमन्दोच्चम् | २।१८।३९।३६ |
| करणाब्दमन्दोच्चम् | २।१८।४७।५४ |
| हार: | ५९९ |
| भुजफलच्छेद: | ३६५।१६ |
| श्रीपुरुषोत्तमदेशान्तरलिप्तादय: | २।३०।६ |
| " खण्डक्षेप: | ०।७।५३।५।२१ |

## (ख । २) चन्द्रस्य मध्यपदकानि

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| १ | ०।१३।१०।३४।५२ | ४ शतम् | ७।२०।३२।२७।५ |
| २ | ०।२६।२१।९।४४ | ५ | ३।१८।१०।३३।५२ |
| ३ | १।९।३१।४४।३६ | ६ | ११।१५।४८।४०।३८ |
| ४ | १।२२।४२।१९।२८ | ७ | ७।१३।२६।४७।२५ |
| ५ | २।५।५२।५४।२० | ८ | ३।११।४।५४।११ |
| ६ | २।१९।३।२९।१२ | ९ | ११।८।४३।०।५७ |
| ७ | ३।२।१४।४।४ | १ सहस्रम् | ७।६।२१।७।४४ |
| ८ | ३।१५।२४।३८।५७ | २ | २।१२।४२।१५।२७ |
| ९ | ३।२८।३५।१३।४९ | ३ | ९।१९।३।२३।११ |
| १० | ४।११।४५।४८।४१ | ४ | ४।२५।२४।३०।५५ |
| २० | ८।२३।३१।३७।२१ | ५ | ०।१।४५।३८।३८ |
| ३० | १।५।१७।२६।२ | ६ | ७।८।६।४६।२२ |
| ४० | ५।१७।३।१४।४३ | ७ | २।१४।२७।५४।६ |
| ५० | ९।२८।४९।३।२३ | ८ | ९।२०।४९।१।४९ |
| ६० | २।१०।३४।५२।४ | ९ | ४।२७।१०।९।३३ |
| ७० | ६।२२।२०।४०।४४ | १ अयुतम् | ०।३।३१।१७।१६ |
| ८० | ११।४।६।२९।२५ | २ | ०।७।२।३४।३३ |
| ९० | ३।१५।५२।१८।६ | ३ | ०।१०।३३।५१।४९ |
| १ शतम् | ७।२७।३८।६।४६ | ४ | ०।१४।५।९।५ |
| २ | ३।२५।१६।१३।३३ | ५ | ०।१७।३६।२६।२२ |
| ३ | ११।२२।५४।२०।१९ | ६ | ०।२१।७।४३।३९ |

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| ७अयुतम् | ०।२४।३९।०।५५ | ५नियुतम् | १०।२०।४३।५७।२२ |
| ८ | ०।२८।१०।१८।११ | ६ | १०।१२।५२।४४।५० |
| ९ | १।१।४१।३५।२८ | ७ | १०।५।१।३२।१८ |
| १लक्षम् | १।५।१२।५२।४५ | ८ | ९।२७।१०।१९।४७ |
| २ | २।१०।२५।४५।३० | ९ | ९।१९।१९।७।१५ |
| ३ | ३।१५।३८।३८।१४ | १कोटिः | ९।११।२७।५४।४३ |
| ४ | ४।२०।५१।३०।५९ | २ | ६।२२।५५।४९।२६ |
| ५ | ५।२६।४।२३।४४ | ३ | ४।४।२३।४४।१० |
| ६ | ७।१।१७।१६।२९ | ४ | १।१५।५१।३८।५३ |
| ७ | ८।६।३०।९।१४ | ५ | १०।२७।१९।३३।३६ |
| ८ | ९।११।४३।१।५९ | ६ | ८।८।४७।२८।१९ |
| ९ | १०।१६।५५।५४।४३ | ७ | ५।२०।१५।२३।३ |
| १नियुतम् | ११।२२।८।४७।२८ | ८ | ३।१।४३।१७।४६ |
| २ | ११।१४।१७।३४।५७ | ९ | ०।१३।११।१२।२९ |
| ३ | ११।६।२६।२२।२५ | १अर्व्वुदम् | ९।२४।३९।७।१२ |
| ४ | १०।२८।३५।९।५३ | | |

चन्द्रस्य द्वापरान्तध्रुवराश्यादयः ०।०।०।०।०

करणाब्दध्रुवः ०।३।२०।२९।५३

गतिलिप्तादयः ७९०।३४।५२।३।४९

भुजच्छेदः २७।१९

देशान्तरलिप्तादयः ३३।२६।४५

केन्द्रक्षेपराश्यादयः ०।१३।३।५३।५७

खण्डक्षेपराश्यादयः ३।१४।३१।११।३७

## (ख । ३) चन्द्रमन्दोच्चस्य पदकानि ।

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| १ | ०।०।६।४०।५५ | ४शतम् | १।१४।२२।४३।२७ |
| २ | ०।०।१३।२१।४९ | ५ | १।२५।४०।५४।१८ |
| ३ | ०।०।२०।२।४४ | ६ | २।६।४९।५।१० |
| ४ | ०।०।२६।४३।३८ | ७ | २।१७।५७।१६।२ |
| ५ | ०।०।३३।२४।३३ | ८ | २।२९।५।२६।५३ |
| ६ | ०।०।४०।५।२७ | ९ | ३।१०।१३।३७।४५ |
| ७ | ०।०।४६।४६।२२ | १सहस्रम् | ३।२१।२१।४८।३७ |
| ८ | ०।०।५३।२७।१६ | २ | ७।१२।४३।३७।१४ |
| ९ | ०।१।०।८।११ | ३ | ११।४।५।२५।५१ |
| १० | ०।१।६।४९।५ | ४ | २।२५।२७।१४।२७ |
| २० | ०।२।१३।३८।१० | ५ | ६।१६।४९।३।४ |
| ३० | ०।३।२०।२७।१६ | ६ | १०।८।१०।५१।४१ |
| ४० | ०।४।२७।१६।२१ | ७ | १।२९।३२।४०।१८ |
| ५० | ०।५।३४।५।२६ | ८ | ५।२०।५४।२८।५५ |
| ६० | ०।६।४०।५४।३१ | ९ | ९।१२।१६।१७।३२ |
| ७० | ०।७।४७।४३।३६ | १अयुतम् | १।३।३८।६।९ |
| ८० | ०।८।५४।३२।४१ | २ | २।७।१६।१२।१७ |
| ९० | ०।१०।१।२१।४७ | ३ | ३।१०।५४।१८।२६ |
| १शतम् | ०।११।८।१०।५२ | ४ | ४।१४।३२।२४।३५ |
| २ | ०।२२।१६।२१।४३ | ५ | ५।१८।१०।३०।४४ |
| ३ | १।३।२४।३२।३५ | ६ | ६।२१।४८।३६।५२ |

| दिनानि | राश्यादय: |
|---|---|
| ७ अयुतम् | ७।२५।२६।४३।१ |
| ८ | ८।२९।४।४९।१० |
| ९ | १०।२।४२।५५।१८ |
| १ लक्षम् | ११।६।२१।१।२७ |
| २ | १०।१२।४२।२।५४ |
| ३ | ९।१९।३।४।२१ |
| ४ | ८।२५।२४।५।४८ |
| ५ | ८।१।४५।७।१५ |
| ६ | ७।८।६।८।४२ |
| ७ | ६।१४।२७।१०।१० |
| ८ | ५।२०।४८।११।३७ |
| ९ | ४।२७।९।१३।४ |
| १ नियुतम् | ४।३।३०।१४।३१ |
| २ | ८।७।०।२९।२ |
| ३ | ०।१०।३०।४३।३२ |
| ४ | ४।१४।०।५८।३ |

| दिनानि | राश्यादय: |
|---|---|
| ५ नियुतम् | ८।१७।३१।१२।३४ |
| ६ | ०।२१।१।२७।५ |
| ७ | ४।२४।३१।४१।३६ |
| ८ | ८।२८।१।५६।७ |
| ९ | १।१।३२।१०।३७ |
| १ कोटि: | ५।५।२।२५।८ |
| २ | १०।१०।४।५०।१६ |
| ३ | ३।१५।७।१५।२५ |
| ४ | ८।२०।९।४०।३३ |
| ५ | १।२५।१२।५।४१ |
| ६ | ७।०।१४।३०।४९ |
| ७ | ०।५।१६।५५।५८ |
| ८ | ५।१०।१९।२१।६ |
| ९ | १०।१५।२१।४६।१४ |
| १ अर्व्वुदम् | ३।२०।२४।११।२२ |

चन्द्रोच्चस्य द्वापरान्तध्रुवराश्यादय: ४।०।३६।०।०

करणाब्दध्रुव: १०।२२।३४।५९।४

गलिलिप्तादय: ६।४०।५४।२१।१

छेद: ३२३३

देशान्तरलिप्तादय: ०।१६।५८

---

## (ख। ४) कुजस्य मध्यपदकानि।

| दिनानि | राश्यादयः |
|---|---|
| १ | ०।०।३१।२६।३० |
| २ | ०।१।२।५३।० |
| ३ | ०।१।३४।१९।३० |
| ४ | ०।२।५।४६।० |
| ५ | ०।२।३७।१२।३० |
| ६ | ०।३।८।३९।१ |
| ७ | ०।३।४०।५।३१ |
| ८ | ०।४।११।३२।१ |
| ९ | ०।४।४२।५८।३१ |
| १० | ०।५।१४।२५।१ |
| २० | ०।१०।२८।५०।२ |
| ३० | ०।१५।४३।१५।३ |
| ४० | ०।२०।५७।४०।५ |
| ५० | ०।२६।१२।५।६ |
| ६० | १।१।२६।३०।७ |
| ७० | १।६।४०।५५।८ |
| ८० | १।११।५५।२०।९ |
| ९० | १।१७।९।४५।१० |
| १शतम् | १।२२।२४।१०।११ |
| २ | ३।१४।४८।२०।२३ |
| ३ | ५।७।१२।३०।३४ |
| ४ | ६।२९।३६।४०।४५ |
| ५ | ८।२२।०।५०।५७ |

| दिनानि | राश्यादयः |
|---|---|
| ६शतम् | १०।१४।२५।१।८ |
| ७ | ०।६।४९।११।१९ |
| ८ | १।२९।१३।२१।३१ |
| ९ | ३।२१।३७।३१।४२ |
| १सहस्रम् | ५।१४।१।४१।५३ |
| २ | १०।२८।३।२३।४७ |
| ३ | ४।१२।५।५।४० |
| ४ | ९।२६।६।४७।३३ |
| ५ | ३।१०।८।२९।२६ |
| ६ | ८।२४।१०।११।२० |
| ७ | २।८।११।५३।१३ |
| ८ | ७।२२।१३।३५।६ |
| ९ | १।६।१५।१६।५९ |
| १अयुतम् | ६।२०।१६।५८।५३ |
| २ | १।१०।३३।५७।४५ |
| ३ | ८।०।५०।५६।३८ |
| ४ | २।२१।७।५५।३० |
| ५ | ९।११।२४।५४।२३ |
| ६ | ४।१।४१।५३।१६ |
| ७ | १०।२१।५८।५२।८ |
| ८ | ५।१२।१५।५१।१ |
| ९ | ०।२।३२।४९।५४ |
| १लक्षम् | ६।२२।४९।४८।४६ |

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| २लक्षम् | ११।१५।३९।३७।३२ | ७नियुतम् | ५।८।६।५३।५३ |
| ३ | ८।८।२९।२६।१९ | ८ | ०।२६।२५।११।३४ |
| ४ | ३।११।१९।१५।५ | ९ | ८।१४।४३।९।१६ |
| ५ | ९।२४।९।३।५१ | १कोटिः | ४।३।११।६।५८ |
| ६ | ४।१६।५८।५२।३७ | २ | ८।६।२।२३।५६ |
| ७ | ११।९।४८।४१।२३ | ३ | ०।९।३।५०।५४ |
| ८ | ६।२।३८।३०।९ | ४ | ४।१२।५।७।५२ |
| ९ | ०।२५।२८।१८।५६ | ५ | ८।१५।६।२४।५० |
| १नियुतम् | ७।१८।१८।७।४२ | ६ | ०।१८।७।४१।४७ |
| २ | ३।६।२६।१५।१४ | ७ | ४।२१।८।५८।४५ |
| ३ | १०।२४।५४।२३।५ | ८ | ८।२४।१०।१५।४३ |
| ४ | ६।१३।१२।३०।४७ | ९ | ०।२७।११।३२।४१ |
| ५ | २।१।३०।३८।२९ | १अर्व्वुदम् | ५।०।१२।४९।३९ |
| ६ | ९।१९।४८।४७।११ | | |

कुजस्य द्वापरान्तध्रुवः ११।१४।५२।४८।०

करणाब्दध्रुवः ५।११।२४।१७।२५

गतिक्षिप्तादयः ३१।२६।३०।६।४८

द्वापरान्तमन्दः ४।६।५४।० द्वापरान्तपातः १।२८।५८।४८.

करणाब्दमन्दः ४।७।१४।२।१३ करणाब्दपातः ०।२८।५१।२३।४१

मन्दहारः ६४५

पातहारः ६७१

भुजच्छेदः ६८७

देशान्तरकलादि ११९।४९

## (ख । ५) बुधशीघ्रस्य पदकानि ।

| दिनानि | राश्यादयः |
|---|---|
| १ | ०।४।५।३२।१६ |
| २ | ०।८।११।४।३२ |
| ३ | ०।१२।१६।३६।४८ |
| ४ | ०।१६।२२।९।४ |
| ५ | ०।२०।२७।४१।२१ |
| ६ | ०।२४।३३।१३।३७ |
| ७ | ०।२८।३८।४५।५३ |
| ८ | १।२।४४।१८।९ |
| ९ | १।६।४९।५०।२५ |
| १० | १।१०।५५।२२।४१ |
| २० | २।२१।५०।४५।२२ |
| ३० | ४।२।४६।८।४ |
| ४० | ५।१३।४१।३०।४५ |
| ५० | ६।२४।३६।५३।२६ |
| ६० | ८।५।३२।१६।७ |
| ७० | ९।१६।२७।३८।४८ |
| ८० | १०।२७।२३।१।३० |
| ९० | ०।८।१८।२४।११ |
| १ शतम् | १।१९।१३।४६।५२ |
| २ | ३।८।२७।३३।४४ |
| ३ | ४।२७।४१।२०।३६ |
| ४ | ६।१६।५५।७।२९ |
| ५ | ८।६।८।५४।२१ |

| दिनानि | राश्यादयः |
|---|---|
| ६ शतम् | ९।२५।२२।४१।१३ |
| ७ | ११।१४।३६।२८।५ |
| ८ | १।३।५०।१४।५७ |
| ९ | २।२३।४।१।४९ |
| १ सहस्रम् | ४।१२।१७।४८।४१ |
| २ | ८।२४।३५।३७।२३ |
| ३ | १।६।५३।२६।४ |
| ४ | ५।१९।११।१४।४६ |
| ५ | १०।१।२९।३।२७ |
| ६ | २।१३।४६।५२।९ |
| ७ | ६।२६।४।४०।५० |
| ८ | ११।८।२२।२९।३२ |
| ९ | ३।२०।४०।१८।१३ |
| १ अयुतम् | ८।२।५८।६।५५ |
| २ | ४।५।५६।१३।४९ |
| ३ | ०।८।५४।२०।४४ |
| ४ | ८।११।५२।२७।३९ |
| ५ | ४।१४।५०।३४।३४ |
| ६ | ०।१७।४८।४१।२८ |
| ७ | ८।२०।४६।४८।२३ |
| ८ | ४।२३।४४।५५।१८ |
| ९ | ०।२६।४३।२।१२ |
| १ लक्षम् | ८।२९।४१।९।७ |

| दिनानि | राश्यादय: |
|---|---|
| २लक्षम् | ५।२९।२२।१८।१४ |
| ३ | २।२९।३।२७।२२ |
| ४ | ११।२८।४४।३६।२९ |
| ५ | ८।२८।२५।४५।३६ |
| ६ | ५।२८।६।५४।४३ |
| ७ | २।२७।४८।३।५१ |
| ८ | ११।२७।२९।१२।५८ |
| ९ | ८।२७।१०।२२।५ |
| १नियुतम् | ५।२६।५१।३१।१२ |
| २ | ११।२३।४३।२।२४ |
| ३ | ५।२०।३४।३३।३७ |
| ४ | ११।१७।२६।४।४९ |
| ५ | ५।१४।१७।३६।१ |
| ६ | ११।११।९।७।१३ |
| ७नियुतम् | ५।८।०।४८।२५ |
| ८ | ११।४।५२।९।३८ |
| ९ | ५।१।४३।४०।५० |
| १कोटि: | १०।२८।३५।१२।२ |
| २ | ९।२७।१०।२४।४ |
| ३ | ८।२५।४५।३६।६ |
| ४ | ७।२४।२०।४८।८ |
| ५ | ६।२२।५६।०।१० |
| ६ | ५।२१।३१।१२।१२ |
| ७ | ४।२०।६।२४।१४ |
| ८ | ३।१८।४१।३६।१६ |
| ९ | २।१७।१६।४८।१८ |
| १अर्व्वुदम् | १।१५।५२।०।२० |

बुधशीघ्रस्य द्वापरान्तध्रुव: १।१।३५।२४।०

करणाब्दध्रुव: १०।१८।१४।१९।२१

गतिर्लिप्तादय: २४५।३२।१६।७।१७

द्वापरान्तमन्द: ७।१५।५४।० द्वापरान्तपात: ०।२९।३१।१२।

करणाब्दमन्द: ७।१६।४।१०।१६ करणाब्दपात: ०।२९।१७।२८।५८

मन्दहार: ४८८

पातहार: ३६२

छेद: ८८

देशान्तरकलादि १०।२३।१५

## (चं । ६) गुरोर्मध्यपदकानि ।

| दिनानि | राश्यादयः | दिनानि | राश्यादयः |
|---|---|---|---|
| १ | ०।०।४।५९।६ | ६ शतम् | १।१९।५०।५६।१० |
| २ | ०।०।९।५८।११ | ७ | १।२८।९।२५।३२ |
| ३ | ०।०।१४।५७।१६ | ८ | २।६।२७।५४।५३ |
| ४ | ०।०।१९।५६।२२ | ९ | २।१४।४६।२४।१५ |
| ५ | ०।०।२४।५५।२८ | १ सहस्रम् | २।२३।४।५३।३७ |
| ६ | ०।०।२९।५४।३४ | २ | ५।१६।९।४७।१४ |
| ७ | ०।०।३४।५३।३९ | ३ | ८।९।१४।४०।५१ |
| ८ | ०।०।३९।५२।४५ | ४ | ११।२।१९।३४।२७ |
| ९ | ०।०।४४।५१।५१ | ५ | १।२५।२४।२८।४ |
| १० | ०।०।४९।५०।५६ | ६ | ४।१८।२९।२१।४१ |
| २० | ०।१।३९।४१।५२ | ७ | ७।११।३४।१५।१८ |
| ३० | ०।२।२९।३२।४९ | ८ | १०।४।३९।८।५५ |
| ४० | ०।३।१९।२३।४५ | ९ | ०।२७।४४।२।३२ |
| ५० | ०।४।९।१४।४१ | १ अयुतम् | ३।२०।४८।५६।८ |
| ६० | ०।४।५९।५।३७ | २ | ७।११।३७।५२।१७ |
| ७० | ०।५।४८।५६।३३ | ३ | ११।२।२६।४८।२५ |
| ८० | ०।६।३८।४७।२९ | ४ | २।२३।१५।४४।३३ |
| ९० | ०।७।२८।३८।२६ | ५ | ६।१४।४।४०।४२ |
| १ शतम् | ०।८।१८।२९।२२ | ६ | १०।४।५३।३६।५० |
| २ | ०।१६।३६।५८।४३ | ७ | १।२५।४२।३२।५९ |
| ३ | ०।२४।५५।२८।५ | ८ | ५।१६।३१।२९।७ |
| ४ | १।३।१३।५७।२७ | ९ | ९।७।२०।२५।१५ |
| ५ | १।११।३२।२६।४८ | १ लक्षम् | ०।२८।९।२१।२४ |

| दिनानि | राश्यादयः |
|---|---|
| २ लक्षम् | १।२६।१८।४२।४७ |
| ३ | २।२४।२८।४।११ |
| ४ | ३।२२।३७।२५।३५ |
| ५ | ४।२०।४६।४६।५८ |
| ६ | ५।१८।५६।८।२२ |
| ७ | ६।१७।५।२९।४६ |
| ८ | ७।१५।१४।५१।९ |
| ९ | ८।१३।१४।१२।३३ |
| १ नियुतम् | ९।११।२३।२३।५७ |
| २ | ६।२३।७।७।५३ |
| ३ | ४।४।४०।४१।३९ |
| ४ | १।१६।१४।२५।४६ |
| ५ | १०।२७।४७।४९।४३ |
| ६ | ८।९।२१।२३।३९ |

| दिनानि | राश्यादयः |
|---|---|
| ७ नियुतम् | ५।२०।५४।७।३६ |
| ८ | ३।२।२८।३१।३२ |
| ९ | ०।१४।२।५।२९ |
| १ कोटिः | ९।२५।३५।३९।२५ |
| २ | ७।२१।११।१८।५० |
| ३ | ५।१६।४६।५८।१६ |
| ४ | ३।१२।२२।३७।४१ |
| ५ | १।७।५८।१७।६ |
| ६ | ११।३।३३।५६।३१ |
| ७ | ८।२९।९।३५।५६ |
| ८ | ६।२४।४५।१५।२२ |
| ९ | ४।२०।२०।५४।४७ |
| १ अर्व्बुदम् | २।१५।५६।३४।१२ |

गुरोर्द्वापरान्तध्रुवः ०।२२।५७।०।०

करणाब्दध्रुवः ०।३।४५।१।२१

गतिलिप्तादयः ४।५९।५।३७।१

द्वापरान्तमन्दः ५।१६।५७ द्वापरान्तपातः ० २।११।९।६

करणाब्दमन्दः ५।१७।१७।०।१५ करणाब्दपातः २।११।३।१५।९

मन्दहारः २४८

पातहारः १८१८

छेदः ४३२३

देशान्तरकलादि ०।१२।३९

